तीयया।
१८१ अवादयः क्रुष्टाद्यर्थे तृतीयया।
१८२ पर्यादयो ग्लानाद्यर्थे चतुर्थ्या।
१८३ निरादयः क्रान्ताद्यर्थे पञ्चम्या।
१८४ कर्मप्रवचनीयानां प्रतिषेधः
१८५ महदात्त्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्भावश्च।
१८६ अष्टन। कपाले हविषि।
१८७ गवि च युक्ते।
१८८ प्राक् शतादिति वक्तव्यम्।
१८९ षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वेति वाच्यम्।
१९० द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः
१९१ संख्यापूर्वं रात्रं क्लीवम्।
१९२ सविशेषणस्य प्रतिषेधः।
१९३ अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः।
१९४ आबन्तो वा।
१९५ अनो नलोपश्च वा द्विगुः स्त्रियाम्।
१९६ पात्राद्यन्तस्य न।
१९७ पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा।
१९८ परः संख्याव्ययादेः।
१९९ सामान्ये नपुंसकम्।
२०० प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः।
२०१ नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः।
२०२ शालि बहुलपार्थस्य पुंवद्भावो वक्तव्यः।
२०३ त्वतलोर्गुणवचनस्य।
२०४ भस्याढे तद्धिते।
१०५ ठक्छसोश्च।
२०६ कुक्कुट्यादीनामण्डादिषु।
२०७ कोपधप्रतिषेधे तद्धितवुकग्रहणम्।
२०८ अमानिनीति वक्तव्यम्।
२०९ अगोवत्सहलेष्विति वाच्यम्।
२१० संख्यायास्तत्पुरुषस्य वाच्यः।
२११ नेतुर्नक्षत्रेऽब्वक्तव्यः।
२१२ खुरखराभ्यां वा नस्।
२१३ वेर्ग्रो वक्तव्यः।
२१४ ख्यश्च।
२१५ गन्धस्येत्त्वे तदेकान्तग्रहणम्।

२१६ ईयसो बहुव्रीहेर्नेति वाच्यम् ।
२१७ सर्वनामसंख्ययोरुपसंख्यानम् ।
२१८ मिथोऽनयोः समासे संख्यापूर्वम् ।
२१९ संख्याया अल्पीयस्याः ।
२२० द्वन्द्वेऽपि ।
२२१ वा प्रियस्य ।
२२२ गड्वादेः परा सप्तमी ।
२२३ जातिकालसुखादिभ्यः परा निष्ठा वाच्या ।
२२४ प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ ।
२२५ अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे ।
२२६ घ्यन्तादजाद्यदन्तं विप्रतिषेधेन ।
२२७ ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण ।
२२८ लघ्वक्षरं पूर्वम् ।
२२९ अभ्यर्हितञ्च ।
२३० वर्णानामानुपूर्व्येण ।
२३१ भ्रातुर्ज्यायसः ।
२३२ स्थूणोर्लुङीति वक्तव्यम् ।
२३३ फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम् ।
२३४ वायुशब्दप्रयोगे प्रतिषेधः ।
२३५ निष्णौ न ।
२३६ विरूपाणामपि समानार्थानाम् ।
२३७ त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते ।
२३८ त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानि ।
२३९ अद्वन्द्वतत्पुरुषविशेषाणामिति वक्तव्यम् ।
२४० अनेकशफेष्विति वाच्यम् ।
२४१ अनृचबह्वृचावध्येतर्य्येव ।
२४२ अवर्णान्ताद्वा ।
२४३ कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते ।
२४४ संख्याया नदीगोदावरीभ्याञ्च ।
२४५ उपाभ्यां चतुरोऽजिष्यते ।
२४६ पल्यराजभ्यां चेति वक्तव्यम् ।
२४७ स्वातिभ्यामेव ।
२४८ ब्राह्मणाच्छंसिन उपसंख्यानम् ।
२४९ अज्ञस उपसंख्यानम् ।
२५० पुंसानुजोजनुषान्ध इति च

२५१ पूरण इति वक्तव्यम् ।
२५२ हृद्‌युभ्यां च ।
२५३ अन्ताच्च ।
२५४ अपो योनियन्मतुषु ।
२५५ वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु ।
२५६ आमुष्यायणाऽमुष्यपुत्रिकाऽऽमुष्यकुलिकेति च ।
२५७ देवानांप्रिय इति च स्मृ ।
२५८ शेपपुच्छलांगूलेषु शुनः ।
२५९ दिवश्च दासे ।
२६० विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम् ।
२६१ कृन्नद्या न ।
२६२ इके चरतावुपसंख्यानम् ।
२६३ नित्यके चेति वाच्यम् ।
२६४ उत्तरपदस्य चेतिवक्तव्यम् ।
२६५ इयङुवङ्भाविमव्ययानां च नेति वाच्यम् ।
२६६ अभ्रुकुंसादीनामिति वक्तव्यम् ।
२६७ मातज्मातृकमातृषु वा ।
२६८ अस्तोश्चेति वक्तव्यम् ।
२६९ धेनोर्भव्यायाम् ।
२७० लोकस्य पृणे ।
२७१ इत्येऽनभ्यासस्य ।
२७२ भ्राष्ट्राग्न्योरिन्धे ।
२७३ गिलेऽगिलस्य ।
२७४ गिलगिले च ।
२७५ उष्णभद्रयोः करणे ।
२७६ इक्षे चेति वक्तव्यम् ।
२७७ त्रौ च ।
२७८ दिक्शब्देभ्यस्तीरस्य तारभावो वा ।
२७९ दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च ।
२८० अपीलवादीनामिति वाच्यम् ।
२८१ शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः ।
२८२ दृग्धृच्त्र्यज्भ्यामेव ।
२८३ इरिकादिभ्यः प्रतिषेधो वक्तव्यः ।
२८४ गिरिनद्यादीनां वा ।
२८५ युवादेर्न ।
२८६ अतपित इति वक्तव्यम् ॥

## तद्धितप्रकरणम् ।

२८७ पृथिव्या ञाञौ ।
२८८ देवाद्यञञौ ।
२८९ बहिषष्टिलोपो यञ् च ।
२९० ईकक् च
२९१ स्थाम्नोऽकारः ।
२९२ भवार्थे तु लुग्वाच्यः ।

२९३ लोम्नोऽपत्येषु बहुषु ।
२९४ गोरजादिप्रसङ्गे यत् ।
२९५ अग्निकलिभ्यां ढग्वक्तव्यः ।
२९६ वृद्धस्य च पूजायामिति वाच्यम् ।
२९७ यूनश्च कुत्सायां गोत्रसंज्ञेति वाच्यम् ।
२९८ व्यासवरुडनिषादचण्डालबिम्बानां चेति वक्तव्यम् ।
२९९ चटकस्येति वाच्यम् ।
३०० स्त्रियामपत्ये लुग्वक्तव्यः ।
३०१ राज्ञो जातावेवेति वाच्यम् ।
३०२ वा हितनाम्न इति वाच्यम् ।
३०३ तक्ष्णोऽण उपसंख्यानम् ।
३०४ परप्रकृतेरेवायमिष्यते ।
३०५ छागवृषयोरपि ।
३०६ त्यदादीनां फिञ् वा वाच्यः ।
३०७ पूरोरण् वक्तव्यः ।
३०८ पण्डोड्यण् ।
३०९ कम्बोजादिभ्य इति वक्तव्यम् ।
३१० शकलकर्दमाभ्यामुपसंख्यानम् ।
३११ नील्या अन् ।
३१२ पीतात्कन् ।
३१३ हरिद्रामहारजनाभ्यामञ् ।
३१४ अस्मिन्नर्थेऽणड्विधा वक्तव्यः ।
३१५ दीप उपसंख्यानम् ।
३१६ शतरुद्राद्घश्च ।
३१७ तदस्मिन्वर्तते इति नवयज्ञादिभ्य उपसंख्यानम् ।
३१८ पूर्णमासादण् वक्तव्यः ।
३१९ पितुर्भ्रातरि व्यत् ।
३२० मातुर्डुलच् ।
३२१ मातृपितृभ्यां पितरि डामहच् ।
३२२ मातरि षिच्च ।
३२३ अवेर्दुग्धेसोढदूसमरीसमरसिचो वक्तव्याः ।
३२४ तिलान्निष्फलात्पिञ्जपेजौ ।
३२५ पिञ्जश्छन्दसि डिच्च ।
३२६ प्रकृत्याऽके राजन्यमनुष्ययुवानः ।
३२७ वृद्धाच्चेति वक्तव्यम् ।
३२८ गणिकाया यञिति वक्तव्यम् ।
३२९ पृष्ठादुपसंख्यानम् ।
३३० गजसहायाभ्यां चेति वक्तव्यम् ।
३३१ अह्नः खः क्रतौ ।
३३२ पर्श्वा णस् वक्तव्यः ।
३३३ खलादिभ्य इनिर्वक्तव्यः ।
३३४ स्वार्थे उपसंख्यानम् ।
३३५ मुख्यार्थात्लक्षणप्रद्युम्नात्

णौ नेष्यते ।

३३६ सूत्रान्ताच्चकल्पादेरेवेष्यते

३३७ विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम् ।

३३८ अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम् ।

३३९ आख्यानाख्यायिकेतिहासपुराणेभ्यश्च ।

३४० सर्वादेः सादेश्च लुग्वक्तव्यः।

३४१ इकन् पदोत्तरपदात् ।

३४२ शतषष्टेः षिकन् पथः ।

३४३ हरीतक्यादिषु व्यक्तिः ।

३४४ खलतिकादिषु वचनम् ।

३४५ मनुष्यलुपि प्रतिषेधः ।

३४६ महिषाच्चेति वक्तव्यम् ।

३४७ अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् ।

३४८ अमेहक्वतसित्रेभ्य एव ।

३४९ अव्ययानां भमात्रे टिलोपः।

३५० त्वब्नेर्ध्रुव इति वक्तव्यम् ।

३५१ निसो गते ।

३५२ अरण्याण्णः ।

३५३ दूरादेत्यः ।

३५४ उत्तरादाहञ् ।

३५५ वा नामधेयस्य वृद्धिसंज्ञा वक्तव्या ।

३५६ आपदादिपूर्वपदात्कालान्तात्

३५७ पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम् ।

३५८ वा गोमयेषु ।

३५९ चिरपरुत्परारिभ्यस्त्नो वक्तव्यः ।

३६० अग्रादिपश्चाड्डिमच् ।

३६१ अन्ताच्च ।

३६२ सुसर्वार्धदिक्शब्देभ्यो जनपदस्य ।

३६३ ऋतो वृद्धिमद्विधावयवानाम् ।

३६४ चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् ।

३६५ फाल्गुन्यषाढाभ्यां टानौ वक्तव्यौ ।

३६६ श्रविष्ठाषाढाभ्यां छण् वक्तव्यम् ।

३६७ जातार्थे प्रतिप्रसूतोऽण् वा ङिद्वक्तव्यः ।

३६८ परिमुखादिभ्य एवेष्यते ।

३६९ अध्यात्मादेष्ठञिष्यते ।

३७० सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् ।

३७१ छहेस्तराणिट् च ।

३७२ अग्नीधः शरणे रण् भं च।
३७३ समिधामाधाने षेण्यण्।
३७४ पत्राद्वाह्ये।
३७५ वैरे देवासुरादिभ्यः प्रतिषेधः।
३७६ चरणाद्धर्माम्नाययोरिति वक्तव्यम्।
३७७ घोषग्रहणमपि कर्त्तव्यम्।
३७८ कौपिञ्जलहास्तिपदादण् वाच्यः।
३७९ आथर्वणिकस्येकलोपश्च।
३८० अस्मनो विकारे टिलोपो वक्तव्यः।
३८१ एकाचो नित्यम्।
३८२ तालाद्धनुषि।
३८३ फलपाकशुषामुपसंख्यानम्।
३८४ पुष्पमूलेषु बहुलम्।
३८५ तदाहेति माशब्दादिभ्य उपसंख्यानम्।
३८६ आहौ प्रभूतादिभ्यः।
३८७ पृच्छतौ सुस्नातादिभ्यः।
३८८ गच्छतौ परदारादिभ्यः।
३८९ इकारादाविति वाच्यम्।
३९० भावप्रत्ययान्तादिमब् वक्तव्यः।
३९१ वृद्धेर्वृधुषिभावो वक्तव्यः।
३९२ अधमर्णाच्चेति वक्तव्यम्।
३९३ नराच्चेति वक्तव्यम्।
३९४ विशासितुरिड्लोपश्चाञ्च वक्तव्यः।
३९५ विभाजयितुर्णिलोपश्चाञ्च वाच्यः।
३९६ नस् नासिकायाः।
३९७ वा केशेषु।
३९८ अचि शीर्ष इति वाच्यम्।
३९९ पञ्चजनादुपसङ्ख्यानम्।
४०० सर्वजनाट्ठञ् खश्च।
४०१ महाजनाट्ठञ्।
४०२ आचार्य्यादणत्वं च।
४०३ सर्वाण्णो वेति वक्तव्यम्।
४०४ पुरुषाद्वधविकारसमूहतेनकृतेषु।
४०५ अर्घाच्चेति वक्तव्यम्।
४०६ कार्षापणाट्टिठन्वक्तव्यः प्रतिरादेशश्च वा।
४०७ बहुपूर्वाच्चेति वक्तव्यम्।
४०८ केवलायाश्चेति वक्तव्यम्।
४०९ द्वित्रिपूर्वादण् च।
४१० वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम्।
४११ सन्निपाताच्चेति वक्तव्यम्।
४१२ ब्रह्मवर्चसादुपसंख्यानम्।
४१३ चतुर्थ्यर्थ उपसंख्यानम्।

४१४ तत्पचतीति द्रोणादण् च ।
४१५ स्तोमे डविधिः ।
४१६ यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् ।
४१७ क्रोशशतयोजनशतयोरुपसंख्यानम् ।
४१८ ततोऽभिगमनमर्हतीति च वक्तव्यम् ।
४१९ आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसंख्यानम् ।
४२० महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम् ।
४२१ चतुर्मासाण्णो यज्ञे तत्र भव इत्यर्थे ।
४२२ संज्ञायामण् ।
४२३ अर्थाभ्यान्तु यथासंख्यं नेष्यते ।
४२४ चूडादिभ्य उपसंख्यानम् ।
४२५ आकालाट्ठंश्च ।
४२६ अर्हतो नुम् च ।
४२७ चतुर्वर्णादीनां स्वार्थ उपसंख्यानम् ।
४२८ श्रोत्रियस्य यलोपश्च ।
४२९ सहायाद्वा ।
४३० खप्रत्ययानुत्पत्तौ यलोपो वा वक्तव्यः ।
४३१ अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम् ।
४३२ गोष्ठजादयः स्थानादिषु पशुनामभ्यः ।
४३३ संघाते कटच् ।
४३४ विस्तारे पटच् ।
४३५ द्वित्वे गोयुगच् ।
४३६ षट्त्वे षड्गवच् ।
४३७ स्नेहे तैलच् ।
४३८ भवने क्षेत्रे शाकटशाकिनौ ।
४३९ कप्रत्ययचिकादेशौ च वक्तव्यौ ।
४४० क्लिन्नस्य चिल् पिल लश्चास्य चक्षुषी ।
४४१ चुल् च ।
४४२ प्रमाणे लः ।
४४३ द्विगोर्नित्यम् ।
४४४ प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये मात्रज्वक्तव्यः ।
४४५ वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् ।
४४६ चतुरश्छयतावाद्यक्षरलोपश्च ।
४४७ तावतिथेन गृह्णातीति कन् वक्तव्यो नित्यं च लुक् ।
४४८ वटकेभ्य इनिर्वाच्यः ।

४४९ भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः।
४५० विश्वगित्युत्तरपदलोपश्चाकृतसन्धेः।
४५१ वृत्तेश्च।
४५२ ज्योत्स्नादिभ्य उपसंख्यानम्
४५३ रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम्।
४५४ नगपांसुपाण्डुभ्यश्च।
४५५ कच्छ्वा ह्रस्वत्वं च।
४५६ अन्येभ्योऽपि दृश्यते।
४५७ अर्णसो लोपश्च
४५८ अन्येभ्योऽपि दृश्यते।
४५९ अन्येभ्योऽपि दृश्यते।
४६० आमयस्योपसंख्यानं दीर्घश्च।
४६१ शृङ्गवृन्दाभ्यामारकन्।
४६२ फलबर्हाभ्यामिनच्।
४६३ हृदयाच्चालुरन्यतरस्याम्।
४६४ शीतोष्णतृप्रेभ्यस्तदसहने
४६५ हिमाच्चेलुः।
४६६ बलादूलः।
४६७ वातात्समूहे च।
४६८ तपर्वमरुद्भ्याम्।
४६९ कुत्सित इति वक्तव्यम्।
४७० प्राण्यङ्गान्न।
४७१ पिशाचाच्च।
४७२ बाहूरुपूर्वपदाद्बलात्।
४७३ सर्वादेश्च।
४७४ अर्थाच्चासन्निहिते।
४७५ तदन्ताच्च।
४७६ सर्वोभयार्थाभ्यामेव।
४७७ समानस्य सभावो द्यश्चाहनि।
४७८ पूर्वपूर्वतरयोः पर उदारी च संवत्सरे।
४७९ इदम इश् समसण् प्रत्ययश्च संवत्सरे।
४८० परस्मादेद्यव्यहनि।
४८१ इदमोऽश् द्यश्च।
४८२ पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस्।
४८३ द्युश्चोभयाद्वक्तव्यः।
४८४ एतदोपि वाच्यः।
४८५ ध्रमुअन्तात्स्वार्थे डदर्शनम्
४८६ तीयादीकक् स्वार्थे वा वाच्यः।
४८७ न विद्यायाः।
४८८ ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्।
४८९ अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः।

४९० शलि को मलोपश्च ।
४९१ चतुर्थादच ऊर्ध्वस्य लोपो वाच्यः ।
४९२ अनजादौ च विभाषा लोपो वक्तव्यः ।
४९३ लोपः पूर्वपदस्य च ।
४९४ विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः ।
४९५ उवर्णाल्ल इलस्य च ।
४९६ ऋवर्णादपि ।
४९७ द्वितीयं सन्ध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः
४९८ एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः ।
४९९ षषष्ठाजादिवचनात्सिद्धम्
५०० किमोऽस्मिन्विषये डतरजपि ।
५०१ पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् ।
५०२ चञ्चद्बृहतोरुपसंख्यानम् ।
५०३ नवस्य नू आदेशःत्नप्तनप्खाश्च प्रत्यया वक्तव्याः ।
५०४ नश्च पुराणे प्रात् ।
५०५ भागरूपनामभ्यो धेयः ।
५०६ आग्नीध्रसाधारणादञ् ।
५०७ लोहितालिङ्गबाधनं वा ।
५०८ बहल्पार्थान्मङ्गलामङ्गलवचनम् ।
५०९ आद्यादिभ्य उपसंख्यानम् ।
५१० अभूततद्भाव इति वक्तव्यम् ।
५११ अव्ययस्य च्वावीत्वं नेति वाच्यम् ।
५१२ डाचि विवक्षिते द्वे बहुलम् ।
५१३ नित्यमाम्रेडिते डाचीति वक्तव्यम् ।
५१४ भद्राच्चेति वक्तव्यम् ।
५१५ आनुपूर्व्ये द्वे वाच्ये ।
५१६ सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः ।
५१७ क्रियासमभिहारे च ।
५१८ कर्मव्यतीहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम् ।
५१९ असमासवद्भावे पूर्वपदस्य सुपः सुर्वक्तव्यः ।
५२० स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः ।

तिङन्तप्रकरणम् ।

५२१ चुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ।
५२२ दुरः षत्वणयोरुपसर्गत्वप्रतिषेधो वक्तव्यः ।

५२३ अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् ।
५२४ आशिषि नाथ इति वाच्यम् ।
५२५ सिज्लोप एकादेशे सिद्धो वाच्यः ।
५२६ इर इत्संज्ञा वाच्या ।
५२७ ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन ।
५२८ सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषधो वक्तव्यः ।
५२९ कास्यनेकाज्ग्रहणं कर्त्तव्यम् ।
५३० ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन
५३१ कमेश्च्लेश्चङ् वाच्यः ।
५३२ आङि चम इति वक्तव्यम् ।
५३३ इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन ।
५३४ गुपेर्निन्दायाम् ।
५३५ तिजेः क्षमायाम् ।
५३६ कितेर्व्याधिप्रतीकारे निग्रहेऽपनयने नाशने संशये च
५३७ मानेर्जिज्ञासायाम् ।
५३८ वधेश्चित्तविकारे ।
५३९ दानेरार्जवे ।
५४० शानेर्निशाने ।
५४१ स्वञ्जेरुपसंख्यानम् ।
५४२ स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः ।
५४३ श्वयतेर्लिट्यभ्यासलक्षण प्रतिषेधः ।
५४४ वर्जने क्शाच् नेष्टः ।
५४५ ऊर्णोतेराम्नेति वाच्यम् ।
५४६ इण्वदिक इति वक्तव्यम् ।
५४७ दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः ।
५४८ लुङि वा ।
५४९ सनि ण्वुलि ल्युटि च न ।
५५० दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ ।
५५१ क्ङिति रमागमं बाधित्वा सम्प्रसारणं पूर्वविप्रतिषेधेन ।
५५२ शे तृम्फादीनां नुम् वाच्यः ।
५५३ अडभ्यासव्यवायेऽपि सुट्कात्पूर्व इति वक्तव्यम् ।
५५४ मस्जेरन्त्यात्पूर्वो नुम् वाच्यः ।
५५५ इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध इति ।
५५६ धूञ्प्रीञोर्नुग्वक्तव्यः ।
५५७ काण्यादीनां वेति वक्तव्यम् ।
५५८ पातेर्णौ लुग्वक्तव्यः ।
५५९ प्रलम्भन...

लियो नित्यमात्त्वमशिति वाच्यम्।

५६० रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः।

५६१ ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्।

५६२ तनिपतिदरिद्रातिभ्यः सनो वा इड् वाच्यः।

५६३ उपाशङ्कायां सन् वक्तव्यः।

५६४ राधो हिंसायां सनीस् वाच्यः।

५६५ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः।

५६६ स च पदान्तवद्वाच्यः।

५६७ हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः।

५६८ रीगृत्वत इति वक्तव्यम्।

५६९ मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यज न

५७० अश्ववृषयोर्मैथुनेच्छायाम्।

५७१ क्षीरलवणयोर्लालसायाम्।

५७२ सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ।

५७३ अधिकरणाच्चेति वक्तव्यम्।

५७४ ओजसोऽप्सरसो नित्यमितरेषां विभाषया।

५७५ आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः।

५७६ सर्वप्रातिपदिकेभ्यः क्विब्वावक्तव्यः।

५७७ डस्योमाङ्क्ष्वाटःप्रतिषेधः।

५७८ लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि।

५७९ सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वाच्यम्।

५८० इनुचलन इति वक्तव्यम्।

५८१ तपसः परस्मैपदञ्च।

५८२ फेनाच्चेति वाच्यम्।

५८३ सुदिनदुर्दिननीहारेभ्यश्च।

५८४ पुच्छादुदसने व्यसने पर्यसने च।

५८५ भाण्डात्समाचयने।

५८६ चीवरार्जने परिधाने च।

५८७ व्रताद्भोजनतन्निवृत्त्योः।

५८८ वस्त्रात्समाच्छादने।

५८९ हल्यादिभ्यो ग्रहणे।

५९० अर्थवेदयोरप्यापुग्वक्तव्यः।

५९१ कण्ड्वादेस्तृतीयस्येति वाच्यम्।

५९२ यथेष्टं नामधातुषु।

५९३ प्रतिबन्धे हसादीनामुपसंख्यानम्।

५९४ हरतेरप्रतिषेधः।

५९५ परस्परोपपदाच्चेति वक्तव्यम्।
५९६ पराङ्गकर्मकान्न निषेधः।
५९७ समोऽकूजने।
५९८ आगमेः क्षमायाम्।
५९९ शिक्षेर्जिज्ञासायाम्।
६०० हरतेर्गतताच्छील्ये।
६०१ किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्।
६०२ सुडपि हर्षादिष्वेव वक्तव्यः।
६०३ आङि नुप्रच्छ्योः।
६०४ शप उपालम्भे।
६०५ आङः प्रतिज्ञायामुपसंख्यानम्।
६०६ ईहायामेव।
६०७ उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्।
६०८ वा लिप्सायामिति वक्तव्यम्।
६०९ स्वाङ्गकर्मकाच्चेति वक्तव्यम्
६१० विदिप्रच्छिस्वरतीनामुपख्यानम्।
६११ अर्त्तिश्रुदृशिभ्यश्चेति व-
६१२ उपसर्गादस्यत्यूह्योर्वेति वाच्यम्।
६१३ ज्योतिरुद्गमन इति वाच्यम्।
६१४ स्वराद्यन्तोपसर्गादिति वक्तव्यम्।
६१५ अदेः प्रतिषेधः।
६१६ घेट उपसंख्यानम्।
६१७ अनाचामिकमिचमीनामिति। वक्तव्यम्।
६१८ सकर्मकाणां प्रतिषेधो वाच्यः।
६१९ दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्।
६२० सृजियुज्योः श्यंस्तु।
६२१ सृजेः श्रद्धोपपन्ने कर्त्तर्य्येवेति वाच्यम्।
६२२ भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्।
६२३ यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम्।
६२४ णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्
६२५ अत्यन्तापह्नव लिङ्वक्तव्यः।
६२६ यदायद्योरुपसंख्यानम्।
६२७ कामप्रवेदन इति वक्तव्यम्।
६२८ क्रियासमभिहारे द्वे वाच्ये।

## कृदन्तप्रकरणम्।

६२९ वसेस्तव्यत् कर्त्तरि णिच्च।
६३० केलिमर उपसंख्यानम्।
६३१ निर्विण्णस्योपसंख्यानम्।
६३२ ण्यन्तभादीनामुपसंख्यानम्
६३३ तकिशसिचतियतिजनिभ्यो यद्वाच्यः।
६३४ हनो वा यद्वधश्च वक्तव्यः।
६३५ चरेराङि चागुरौ।
६३६ आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्।
६३७ समश्च बहुलम्।
६३८ छन्दसीति वक्तव्यम्।
६३९ पाणौ सृजेर्ण्यद्वाच्यः।
६४० समवपूर्वाच्च।
६४१ त्यजेश्च।
६४२ ण्यत्प्रकरणे लपिदभिभ्यां चेति वक्तव्यम्।
६४३ क्रमः कर्त्तर्यात्मनेपदविषयात्कृत इण्निषेधो वाच्यः।
६४४ चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम्।
६४५ हन्तेर्घत्वञ्च।
६४६ पाटेर्णिलुक् चोकच दीर्घश्चाभ्यासस्य।
६४७ नौ लिपेर्वाच्यः।
६४८ गवादिषु विन्देः संज्ञायाम्।
६४९ तेनोतेरुपसंख्यानम्।
६५० नृतिखनिरञ्जिभ्य एव।
६५१ अस्य केऽने च रञ्जेर्नलोपो वाच्यः।
६५२ शीलिकामिभक्ष्याचरिभ्यो णः।
६५३ ईक्षिक्षमिभ्यां च।
६५४ कविधौ सर्वत्र सम्प्रसारणिभ्यो डः।
६५५ आलस्यसुखाहरणयोरिति वक्तव्यम्।
६५६ कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्।
६५७ शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसंख्यानम्।
६५८ सूत्रे च धार्य्यर्थे।
६५९ हस्तिसूचकयोरिति वक्तव्यम।
६६० पार्श्वादिषूपसंख्यानम्।
६६१ उत्तानादिषु कर्तृषु।
६६२ गिरौ डश्छन्दसि।
६६३ कियत्तद्बहुषु कृञोऽज्विधानम्।

६६४ व्रीहिवत्सयोरिति वक्तव्यम्।
६६५ वातशुनीतिलशर्धेष्वजधेटतुदजहातिभ्यः खश् उपसंख्यानम्।
६६६ स्तने धेटो नासिकायां ध्मश्चेति वाच्यम्।
६६७ घटीखारीखरीषूपसंख्यानम्।
६६८ गमे सुपि वाच्यः।
६६९ विहायसो विह इति वाच्यम्।
६७० खश्च डिद्वा वाच्यः।
६७१ सर्वत्रपन्नयोरुपसंख्यानम्।
६७२ उरसो लोपश्च।
६७३ सुदुरोरधिकरणे।
६७४ अन्यत्रापि दृश्यत इति वक्तव्यम्
६७५ डे च विहायसो विहादेशो वक्तव्यः।
६७६ दारावाहनोऽणन्तस्य च टः संज्ञायाम्।
६७७ चारौ वा
६७८ कर्मणि समि च
६७९ राजघ उपसंख्यानम्।
६८० समानान्ययोश्चेति वाच्यम्
६८१ क्सोपि वाच्यः।
६८२ अग्रग्रामाभ्यां नयतेर्णो वाच्यः :
६८३ आशासः क्वावुपधाया इत्वं वाच्यम्।
६८४ गमादीनामिति वक्तव्यम्।
६८५ ऊङ्च गमादीनामिति वक्तव्यम्।
६८६ साधुकारिण्युपसंख्यानम्।
६८७ ब्रह्मणि वदः।
६८८ कुत्सितग्रहणं कर्त्तव्यम्।
६८९ ऊर्णोतेर्णुवद्भावो वाच्यः।
६९० दुग्वोर्दीर्घश्च।
६९१ पूञो विनाशे।
६९२ सिनोतेर्ग्रासकर्मकर्तृकस्य
६९३ निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः।
६९४ उत्फुल्लसंफुल्लयोरुपसंख्यानम्।
६९५ आदिकर्मणि निष्ठा वाच्या
६९६ क्षीरहविषोः पाकेः।
६९७ विस्मितप्रतिघातयोश्च।
६९८ दृशेश्च।
६९९ माङ्याक्रोश इति वाच्यम्
७०० दंशश्छन्दस्युपसंख्यानम्।
७०१ शीङो वाच्यः।
७०२ भाषायां धाञ्कृसृगमिजनिनमिभ्यः।

७०३ सासहिवावहिचाचलिपापतीनामुपसंख्यानम् ।
७०४ कुकन्नपि वाच्यः ।
७०५ क्विब् वचिप्रच्छ्यायतस्तुकटप्रुज्जुश्रीणां दीर्घोऽसम्प्रसारणं च
७०६ द्युतिगमिजुहोतीनां द्वे च ।
७०७ जुहोतेर्दीर्घश्च ।
७०८ ध्यायतेः सम्प्रसारणं च ।
७०९ मितद्र्वादिभ्य उपसंख्यानम् ।
७१० व्याधिमत्स्यबलेषु चेति वाच्यम् ।
७११ दारजारौ कर्त्तरि णिलुक् च ।
७१२ अपादानेस्त्रियामुपसंख्यान तदन्ताच्च वा ङीप् ।
७१३ शॄ वायुवर्णनिवृतेषु ।
७१४ भयादीनामुपसंख्यानम् ।
७१५ वशिरण्योरुपसंख्यानम् ।
७१६ घञर्थे कविधानम् ।
७१७ द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम् ।
७१८ श्रुयजीषिस्तुभ्यः करणे ।
७१९ ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः ।
७२० ति च ।
७२१ चायतेः क्तिनि चिभावो वाच्यः ।
७२२ सम्पदादिभ्यः क्विप् ।
७२३ क्तिन्नपीष्यते ।
७२४ अजेः क्यपि वीभावो नेति वाच्यम् ।
७२५ परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम् ।
७२६ जागर्त्तेरकारो वा ।
७२७ निष्ठायां सेट इति वक्तव्यम् ।
७२८ तितुत्रेष्वग्रहादानीमिति वाच्यम् ।
७२९ घट्टिवन्दिविदिभ्यश्चेति वाच्यम् ।
७३० इषेरनिच्छार्थस्य ।
७३१ परेर्वा ।
७३२ धात्वर्थनिर्द्देशे ण्वुल् वक्तव्यः ।
७३३ इक्श्तिपौ धातुनिर्द्देशे ।
७३४ वर्णात्कारः ।
७३५ रादिफः ।
७३६ वत्वर्थाच्छः ।
७३७ इणजादिभ्यः ।
७३८ इञ् वपादिभ्यः ।
७३९ इक् कृष्यादिभ्यः ।

७४० अवहाराधारावायानामुपसंख्यानम् ।

७४१ खनेर्डडरेकेकवका वाच्याः ।

७४२ निमिमीलियां खलचोराखन्नेति वाच्यम् ।

७४३ कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम् ।

७४४ भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः ।

७४५ स्वरत्यादेः श्न्युकः कितीति नित्यमिडभावः पूर्वविप्रतिषेधेन ।

७४६ झलदाविति वाच्यम् ।

## वैदिकप्रकरणम् ।

७४७ नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् ।

७४८ वृषण्वस्वश्वयोः ।

७४९ उभयसंज्ञान्यपीति वक्तव्यम् ।

७५० षष्ठ्यर्थे चतुर्थीति वाच्यम् ।

७५१ हिरण्य इति वक्तव्यम् ।

७५२ श्वेतवहादीनां डस्पदस्येति वक्तव्यम् ।

७५३ छन्दसि परेच्छायां क्यच उपसंख्यानम् ।

७५४ एरजधिकारे जवसवौ छन्दसि वाच्यौ ।

७५५ सिव्बहुलं णिद्वक्तव्यः ।

७५६ दृशोरग्वक्तव्यः ।

७५७ मुद्गलाच्छन्दसि लिच्च ।

७५८ गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् ।

७५९ आविष्ट्यस्योपसंख्यानं छन्दसि ।

७६० अक्षरसमूहे छन्दस उपसंख्यानम् ।

७६१ सन्शतोर्डिनिश्छन्दसि तदस्य परिमाणमित्यर्थे वाच्यः ।

७६२ विंशतेश्चेति वाच्यम् ।

७६३ युष्मदस्मदोः सादृश्ये मतुव्वाच्यः ।

७६४ छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम् ।

७६५ छन्दसीवनिपौ च वक्तव्यौ ।

७६६ छन्दसि वेति वक्तव्यम् ।

७६७ ऋचि त्रेरुत्तरपदादिलोपश्च च्छन्दसि ।

७६८ रयेर्मतौ बहुलम् । एमन्नादिषु छन्दसिपररूपं वक्तव्यम् ।

७६९ हृद्य्या उपसंख्यानम् ।
७७० ईषाअक्षादीनां छन्दसि प्रकृतिभावो वक्तव्यः ।
७७१ छन्दसि स्त्रियां बहुलम् ।
७७२ तन्वादीनां छन्दसि बहुलम् ।
७७३ इयाडियाजीकाराणामुपसंख्यानम् ।
७७४ आङयाजयारामुपसंख्यानम् ।
७७५ पावकादीनां छन्दसि प्रत्ययस्थात्कादित्वं नेति वाच्यम् ।
७७६ जसादिषु छन्दसि वा वचनं प्राङ्णौ चङ्युपधायाः ।
७७७ नाभ्यस्तस्याचीति निषेधे बहुलं छन्दसीति वक्तव्यम् ।
७७८ अपुत्रादीनामिति वाच्यम् ।
७७९ मासश्छन्दसीति वक्तव्यम्
७८० स्ववः स्वतवसोरुषश्चेष्यते ।
७८१ भूरिदाव्नस्तुड्वाच्यः ।
७८२ ईद्रथिनः ।
७८३ प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्वेव ।
७८४ आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः ।
७८५ वन उपसंख्यानम् ।
७८६ सतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्य इति वाच्यम् ।
७८७ अतद्धित इति वाच्यम् ।
७८८ षष्ठ्यामन्त्रितकारकवचनम्
७८९ पूर्वाङ्गवच्चेति वक्तव्यम् ।
७९० अव्ययानाञ्च ।
७९१ अव्ययीभावस्य त्विष्यते ।
७९२ असावित्यन्तः ।
७९३ अमुष्यत्यन्तः ।
७९४ स्यान्तस्योपोत्तमं च ।
७९५ वा नामधेयस्य ।
७९६ संज्ञायान्तु निष्ठा च छजनादिति नित्यमाद्युदात्तत्वं पूर्वविप्रतिषेधेन ।
७९७ चित्तः सप्रकृतेर्बह्वकजर्थम् ।
७९८ ऊटयुपधाग्रहणं कर्त्तव्यम्
७९९ रेशब्दाच्च ।
८०० विन्दीन्धिखिदिभ्यो नेति वक्तव्यम् ।
८०१ अव्यये नञ्कुनिपातानाम् ।
८०२ वृजेरिति वाच्यम् ।
८०३ संज्ञायामिति वक्तव्यम् ।

८०४ अनुपसर्ग इति वक्तव्यम्।
८०५ आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्।
८०६ चेलराज्यादिस्वरादव्ययस्वरः पूर्वविप्रतिषेधेन।
८०७ ऋषिप्रतिषेधोऽत्र मित्रे।
८०८ अतेर्धातुलोप इति वाच्यम्।
८०९ परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते। पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलन्ततः।
८१० मलोपश्च वक्तव्यः।
८११ गतिग्रहणे उपसर्गग्रहणमिष्यते।
८१२ क्रिया कुत्सन इति वाच्यम्।
८१३ पुतिश्चानुबन्ध इति वाच्यम्
८१४ वावद्धर्धमनुबाच्चमिति वाच्यम्।

इति कौमुद्यन्तर्गतवार्त्तिकपाठः।

# अथ परिभाषापाठः ।

१ व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम् ॥

२ यथोद्देशं संज्ञापरिभाषम् ।

३ कार्यकालं संज्ञापरिभाषम् ॥

४ अनेकान्ता अनुबन्धाः ॥

५ एकान्ता अनुबन्धाः ॥

६ नानुबन्धकृतमनेकाल्त्वम् ॥

७ नानुबन्धकृतमनेजन्तत्वम् ॥

८ नानुबन्धकृतमसारूप्यम् ॥

९ उभयगतिरिह भवति ॥

१० कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते ।

११ यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥

१२ निर्दिश्यमानस्यादेशा भवन्ति ॥

१३ यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥

१४ अर्थवद्ग्रहणे नानर्थकस्य (ग्रहणम्) ॥

१५ गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः ।

१६ अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥

१७ एकयोगनिर्दिष्टानां सह वा प्रवृत्तिस्सह वा निवृत्तिः ॥

१८ एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्तते ॥

१९ भाव्यमानेन सवर्णानां ग्रहणं न ॥

२० भाव्यमानोऽप्युकारस्सवर्णान् गृह्णाति ॥

२१ वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥

२२ उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥

२३ प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥

२४ प्रत्ययग्रहणे चापञ्चम्याः ॥

२५ उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥

२६ स्त्रीप्रत्यये चानुपसर्जने न ॥

२७ संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥

२८ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥

२९ पदाङ्गाधिकारे तस्य च तदन्तस्य च ॥

३० व्यपदेशिवदेकस्मिन् ॥

३१ ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ॥

३२ व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥

३३ यस्मिन्विधिस्तदादावल्ग्रहणे

३४ सर्वो द्वन्द्वो विभाषयैकवद्भवति ॥

३५ सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥

३६ प्रकृतिवदनुकरणं भवति ॥

३७ एकदेशविकृतमनन्यवत् ॥

३८ पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥

३९ पुनः प्रसङ्गविज्ञानात्सिद्धम् ॥

४० सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥

४१ विकरणेभ्यो नियमो बलीयान् ॥

४२ परान्नित्यं बलवत् ॥

४३ कृताऽकृतप्रसंगि नित्यम् ॥

४४ शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥

४५ शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ॥

४६ लक्षणान्तरेण प्रप्नुवन्विधिरानित्यः ॥

४७ क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता ॥

४८ यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥

४९ यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥

५० स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यः ॥

५१ असिद्धं बहिरङ्गमन्तरंगे ॥

५२ नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥

५३ अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधते ॥

५४ पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न ॥

५५ अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ॥

५६ वार्णादाङ्गं बलीयो भवति ॥

५७ अकृतव्यूहाः पाणिनीयाः ॥

५८ अन्तरगादप्यपवादो बलीयान् ॥

५९ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति

६० क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ॥

६१ पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान् ॥

६२ मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान् ॥

६३ अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥

६४ पूर्वं ह्यपवादा अभिनिविश-
न्ते पश्चादुत्सर्गाः ॥

६५ प्रकल्प्य चापवादविषयं त-
त उत्सर्गोऽभिनिविशते ॥

६६ उपजसंनिष्यमाणनिमित्तो-
ऽप्यपवाद उपसंजातनिमि-
त्तमप्युत्सर्गं बाधत इति ॥

६७ अपवादो यद्यन्यत्र चरिता
र्थस्तर्ह्यन्तरङ्गेण बाध्यते ॥

६८ अभ्यासविकारेषु बाध्य-
बाधकभावो नास्ति ॥

६९ ताच्छीलिकेषु वासरूपवि-
धिर्नास्ति ॥

७० क्तल्युट्तुमुन्खलर्थेषु वास-
रूपविधिर्नास्ति ॥

७१ लादेशेषु वासरूपविधि-
र्नास्ति ॥

७२ उभयनिर्देशे पञ्चमीनिर्देशो
बलीयान् ॥

७३ प्रातिपदिकग्रहणे लिङ्गवि-
शिष्टस्यापि ग्रहणम् ॥

७४ विभक्तौ लिङ्गविशिष्टाग्र-
हणम् ॥

७५ सूत्रे लिङ्गवचनमतन्त्रम् ॥

७६ नञिवयुक्तमन्यसदृशाधि-
करणे तथा ह्यर्थगतिः ॥

७७ गतिकारकोपपदानां कृद्भिः
सह समासवचनं प्राक्
सुबुत्पत्तेः ॥

७८ सांप्रतिकाभावे भूतपूर्वगतिः

७९ बहुव्रीहौ तद्गुणसंविज्ञा-
नमपि ॥

८० चानुकृष्टं नोत्तरत्र ॥

८१ स्वरविधौ व्यञ्जनमविद्यमा-
नवत् ॥

८२ हल्स्वरप्राप्तौ व्यञ्जनमवि-
द्यमानवत् ॥

८३ निरनुबन्धकग्रहणे न सा-
नुबन्धकस्य ( ग्रहणम् ) ॥

८४ तदनुबन्धकग्रहणे नातद-
नुबन्धकस्य ( ग्रहणम् ) ॥

८५ क्वचित्स्वार्थिकाः प्रकृतितो
लिङ्गवचनान्यतिवर्तन्ते ॥

८६ समासान्तविधिरनित्यः ॥

८७ सन्निपातलक्षणो विधिर-
निमित्तं तद्विघातस्य ॥

८८ संनियोगशिष्टानामन्यतरा-
पाये उभयोरप्यपायः ॥

८९ ताच्छीलिके णेऽण्कृतानि
भवन्ति ॥

९० धातोः कार्यमुच्यमानं त-
त्प्रत्यये भवति ॥

९१ तन्मध्यपतितस्तद्ग्रहणेन गृ-
ह्यते ॥

९२ लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥
९३ प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ॥
९४ अङ्गवृत्ते पुनर्वृत्तावविधिः ॥
९५ संज्ञापूर्वकोविधेरनित्यत्वम् ॥
९६ आगमशास्त्रमनित्यम् ॥
९७ गणकार्यमनित्यम् ॥
९८ अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥
९९ नञ्घटितमनित्यम् ॥
१०० आतिदेशिकमनित्यम् ॥
१०१ सर्वविधिभ्यो लुग्विधिरिड्विधिश्च बलवान् ॥
१०२ प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥
१०३ विधौ परिभाषोपतिष्ठते नानुवादे ॥
१०४ उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥
१०५ अनन्त्यविकारे ऽन्त्यसदेशस्य ॥
१०६ नानर्थकेऽलोन्त्यविधिरभ्यासविकारे ॥
१०७ प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः ॥
१०८ अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥
१०९ व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥
११० विधिनियमसम्भवे विधिरेव ज्यायान् ॥
१११ सामान्यातिदेशे विशेषानतिदेशः ॥
११२ प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम् ॥
११३ सहचरितासहचरितयोस्सहचरितस्यैव ग्रहणम् ॥
११४ श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान् ॥
११५ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥
११६ गामादाग्रहणेष्वविशेषः ॥
११७ प्रत्येकं वाक्यपरिसमाप्तिः ॥
११८ क्वचित्समुदायेऽपि ॥
११९ अभेदका गुणाः ॥
१२० बाधकान्येव निपतनानि ॥
१२१ पर्जन्यवल्लक्षणप्रवृत्तिः ॥
१२२ लक्ष्ये लक्षणं सकृदेव प्रवर्तते ॥
१२३ निषेधाश्च बलीयांसः ॥
१२४ अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ।
१२५ योगविभागादिष्टसिद्धिः ॥

१२६ पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ॥

१२७ ज्ञापकसिद्धं न सर्वत्र ॥

१२८ पूर्वत्रासिद्धीयमद्वित्वे ॥

१२९ एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥

१३० संप्रसारणं तदाश्रयं च कार्यं बलवत् ॥

१३१ क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥

१३२ औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥

१३३ श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ॥ यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥

१३४ पदगौरवाद्योगविभागो गरीयान् ॥

१३५ अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः

इति परिभाषापाठः समाप्तः ।

॥ श्रीरस्तु ॥

# अथ पाणिनीयो धातुपाठः।

## भ्वादयः।

१ भू सत्तायाम्। 'उदात्तः परस्मैभाषः' ॥

अथ षट्त्रिंशत्तवर्गीयान्ता आत्मनेपदिनः ॥

२ एध वृद्धौ।

३ स्पर्ध सङ्घर्षे।

४ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च।

५ बाधृ लोडने।

६ नाथृ।

७ नाधृ याच्ञोपतापैश्वर्याशीःषु।

८ दध धारणे।

९ स्कुदि आप्रवणे।

१० श्विदि श्वैत्ये।

११ वदि अभिवादनस्तुत्योः।

१२ भदि कल्याणे सुखे च।

१३ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु।

१४ स्पदि किञ्चिच्चलने।

१५ क्लिदि परिदेवने।

१६ मुद हर्षे।

१७ दद दाने।

१८ ष्वद।

१९ स्वर्द आस्वादने।

२० उर्द माने क्रीडायां च।

२१ कुर्द।

२२ खुर्द।

२३ गुर्द ॥

२४ गुद क्रीडायामेव।

---

१ सत्ता—आत्मधारणानुकूलव्यापारः।

२ वृद्धिः—वर्द्धनम् उपचयः।

३ संघर्षः पराभिभवेच्छा।

४ प्रतिष्ठा—ख्यातिः—लिप्सा—लब्धुमिच्छा—प्राप्त्यभिलाषा।

५ लोडनम्—प्रतिघातः।

६ याञ्चा—भिक्षा—उपतापो रोगः

९ आप्रवणम्—आप्लवनम्—उत्प्लवः। उद्धरणञ्च।

१० श्वैत्यम्—श्वेतस्य भावः—शुक्लीभवनम्।

११ अभिवादनम्—नमस्कारः।

१३ मोदः—सन्तोषः। मदो गर्वः। स्वप्न आलस्यम्। कान्तिरिच्छा।

१४ किञ्चिचलनम्—मन्दगमनम्।

१५ परिदेवनम्—शोकः।

१७ दानम्—स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनम्।

१८ १९ आस्वादनम्—अनुभवः।

२० मानम्—परिमाणम्

२५ क्षूद क्षरणे ।
२६ ह्राद अव्यक्ते शब्दे ।
२७ ह्रादी सुखे च ।
२८ स्वाद आस्वादने ।
२९ पर्द कुत्सिते शब्दे ।
३० यती प्रयत्ने ।
३१ युतृ ।
३२ जुतृ भासने ।
३३ विथृ ।
३४ वेथृ याचने ।
३५ श्रथि शैथिल्ये ।
३६ ग्रथि कौटिल्ये ।
३७ कत्थ श्लाघायाम् ॥
'एधादय उदात्ता अनुदात्तेत आत्मनेभाषाः' ॥
अथाष्टत्रिंशत्तवर्गीयान्ताः ॥
३८ अत सातत्यगमने ।

२५ क्षरणम्-प्रस्रवणम् ।
२६ अव्यक्तः-अस्फुटः
२९ कुत्सितः शब्दः गुदरवः ।
३० प्रयत्नः—उद्योगः ।
३२ भासनम्—दीप्तिः ।
३४ याचनम्—भिक्षा ।
३५ शैथिल्यम्—अवयवानां विभागः विस्रणं च ।
३६ कौटिल्यं-कुटिलता, वक्रता ।
३७ श्लाघा-अविद्यमानगुणसम्बन्धज्ञापनम् ।
३८ सातत्यगमनम्—अनवरतचलनम् ।

३९ चिती संज्ञाने ।
४० च्युतिर् आसेचने ।
४१ श्च्युतिर् ( श्चुतिर् ) क्षरणे ।
४२ मन्थ विलोडने ।
४३ कुथि ।
४४ पुथि ।
४५ लुथि ।
४६ मथि हिंसासंक्लेशनयोः ।
४७ षिध गत्याम् ।
४८ षिधू शास्त्रे माङ्गल्ये च ।
४९ खाद्द भक्षणे ।
५० खद स्थैर्ये हिंसायां च ।
५१ बद स्थैर्ये ।
५२ गद व्यक्तायां वाचि ।
५३ रद विलेखने ।
५४ णद अव्यक्ते शब्दे ।
५५ अर्द गतौ याचने च ।
५६ नर्द ।
५७ गर्द शब्दे ।
५८ तर्द हिंसायाम् ।
५९ कर्द कुत्सिते शब्दे ।
६० खर्द दन्दशूके ।
६१ अति ।

३९ संज्ञानम्—सम्यक् ज्ञानम् बोधः ।
६० दन्दशूकः—दन्दशूककर्तृकक्रिया ।

६२ अदि बन्धने।
६३ इदि परमैश्वर्ये।
६४ बिदि अवयवे॥
भिदि इत्येके॥
६५ गडि वदनैकदेशे।
६६ णिदि कुत्सायाम्।
६७ टुनदि समृद्धौ।
६८ चदि आह्लादे। दीप्तौ च।
६९ त्रदि चेष्टायाम्।
७० कदि।
७१ क्रदि।
७२ क्लदि आह्वाने रोदने च।
७३ क्लिदि परिदेवने।
७४ शुन्ध शुद्धौ॥
'अतादय उदात्ता उदात्तेतः परस्मैभाषाः॥
अथ कवर्गीयान्ताः आत्मनेपदिनः द्विचत्वारिंशत्॥
७५ शीकृ सेचने।
७६ लोकृ दर्शने।
७७ श्लोकृ सङ्घाते।
७८ द्रेकृ।
७९ ध्रेकृ शब्दोत्साहयोः।
८० रेकृ शङ्कायाम्।
८१ सेकृ।
८२ स्रेकृ।
८३ स्रकि।
८४ श्रकि।
८५ श्लकि गतौ।
८६ शकि शङ्कायाम्।
८७ अकि लक्षणे।
८८ वकि कौटिल्ये।
८९ मकि मण्डने।
९० कक लौल्ये।
९१ कुक।
९२ वृक आदाने।
९३ चक तृप्तौ प्रतिघाते च।
९४ ककि।
९५ वकि।

---

६४ अवयवः—एकदेशः।
६५ वदनैकदेशः—मुखावयवः (कपोलः) (गण्डस्थलम्)
६६ कुत्सा—निन्दा।
६७ समृद्धिः—सम्यक् वर्द्धनम्।
६८ आह्लादः— हर्षः। रोदनं–क्रन्दनम्।
(१) 'सीकृ। इति पाठान्तरम्।
८७ लक्षणम्—अङ्कनम् —(चिन्हम्)।
८९ मण्डनम्—भूषणम्।
९० लौल्यम्—गर्वः—चापल्यञ्च।
९२ आदानम्—ग्रहणम्।
तृप्तिः—तर्पणम्।
७२ आह्वानम्—आकर्षणम्।
७३ परिदेवनम्—शोकः।
७४ शुद्धिः– शौचकर्म।

९६ श्वकि।
९७ त्रकि।
९८ ढौकृ॥
९९ त्रौकृ।
१०० ष्वष्क।
१०१ वस्क।
१०२ मस्क।
१०३ टिकृ॥
१०४ टीकृ।
१०५ तिकृ।
१०६ तीकृ॥
१०७ रघि।
१०८ लघि गत्यर्थाः॥
तृतीयो दन्त्यादिरित्येके॥
लघि भोजननिवृत्तावपि॥
१०९ अघि।
११० वघि॥
१११ मघि गत्याक्षेपे।
गतौ गत्यारम्भे चेत्यपरे।
मघि कैतवे च॥
११२ राघृ।
११३ लाघृ॥
११४ द्राघृ सामर्थ्ये॥
ध्राघृ इत्यपि केचित्।
द्राघृ आयामे च॥
११५ श्लाघृ कत्थने॥
'शीङादय उदात्ता अनुदात्ता अनुदात्तेत आत्मनेभाषाः॥
अथ कवर्गीयान्ताः परस्मैपदिनः अष्टपञ्चाशत्॥
११६ फक्क नीचैर्गतौ॥
११७ तक हसने।
११८ तकि कृच्छ्रजीवने।
(शुक गतौ।)
११९ बुक्क भषणे।
१२० कख हसने।
१२१ ओखृ।
१२२ राखृ।
१२३ लाखृ।
१२४ द्राखृ।
१२५ ध्राखृ शोषणालमर्थयोः।
१२६ शाखृ।
१२७ श्लाखृ व्याप्तौ।

---

९५ सेचनम्—आर्द्रीकरणम्।
९६ दर्शनम्—प्रेक्षणम्।
९७ संघातः—समूहः। समुदायः।
१११ गतिः—गत्यारम्भः। आक्षेपः—निन्दा।
१११ कैतवम्—धौर्त्यम्।
(१)'स्वक्क'इति' पाठान्तरम्।
११४ सामर्थ्यम्—पराक्रमः।
११४ आयामः—दैर्घ्यम्।
११५ कत्थनम्—श्लाघा।
११६ नीचैर्गतिः—मन्दगमनम्।
११८ कृच्छ्रजीवनम्—क्लेशेन जीवनम्।
(कम्पनम्—चलनम्।

१२८ उख ॥
१२९ उखि ।
१३० वख ।
१३१ वखि ।
१३२ मख ।
१३३ मखि ।
१३४ णख ।
१३५ णखि ।
१३६ रख ।
१३७ रखि ।
१३८ लख ।
१३९ लखि ।
१४० इख ।
१४१ इखि ।
१४२ ईखि ।
१४३ वल्ग ।
१४४ रगि ।
१४५ लगि ।
१४६ अगि ।
१४७ वगि ।
१४८ मगि ॥
१४९ तगि ।
१५० त्वगि ।
१५१ श्रगि ।
१५२ श्लगि ।
१५३ इगि ।
१५४ रिगि ।
१५५ लिगि गत्यर्थाः ॥
रिख ( रिखि लिख लि-खि ) त्रख त्रिखि शिखि इत्यपि केचित् ।
त्वगि कम्पने च ॥
१५६ युगि ।
१५७ जुगि ।
१५८ वुगि वर्जने ।
१५९ घघ हसने । ( दघि पालने लघि शोषणे । )
१६० मघि मण्डने ।
१६१ शिघि आघ्राणे । ( अर्घ मूल्ये )। फक्कादय उदात्तेतः परस्मैभाषाः" ॥
अथ चवर्गीयान्ताः आत्मनेपदिनः एकविंशतिः ॥
१६२ वर्च दीप्तौ ।
१६३ षच सेचने सेवने च ।
१६४ लोचृ दर्शने ।
१६५ शच व्यक्तायां वाचि ।
१६६ श्वच ।

---

१५८ वर्जनम् । त्यागः ।
१६० मण्डनम्—भूषणम्—शोभा च ।
१६१ आघ्राणम्-गन्धोपादानम् ।
१६२ दीप्तिः—प्रकाशः ।
१६३ सेचनम्-आर्द्रीकरणम् । सेवनं शुश्रूषा
१६४ दर्शनम्—प्रेक्षणम् ( अवलोकनम् )
१६५ व्यक्ता वाक्—स्फुटा—वाणी ।

१६७ श्वचि गतौ । (शचिच । )
१६८ कच बन्धने ।
१६९ काचि ।
१७० काचि दीप्तिबन्धनयोः ।
१७१ मच ।
१७२ मुचि कल्कने । कथन इत्यन्ये ॥
१७३ माचि धारणोच्छ्रायपूजनेषु ।
१७४ पाचि व्यक्तीकरणे ।
१७५ ष्टुच प्रसादे ।
१७६ ऋज गतिस्थानार्जनोपार्जनेषु ।
१७७ ऋजि ।
१७८ भृजी भर्जने ।
१७९ एजृ ।
१८० भ्रेजृ ।
१८१ भ्राजृ दीप्तौ ।
१८२ ईज गतिकुत्सनयोः ॥

१६८ बन्धनम्—संयमनम् ।
१७२ कल्कनम्—दम्भः—शाठ्यं च ( कथनम् ।
१७३ धारणम्—ग्रहणम्—उच्छ्रायः उन्नतिः—पूजनम्—अर्चा ।
१७४ व्यक्तीकरणम्—स्फुटीकरणम् ।
१७५ प्रसादः—प्रसन्नता ।
१७८ भर्जनम्—जलं विना तण्डुलादेः सन्तापविशेषः ।
१८२ कुत्सनम्—गर्हणम् ।

'वर्चादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥
अथ चवर्गीयान्ता व्रज्यन्ताः परस्मैपदिनः द्विसप्ततिः ॥
१८३ शुच शोके ।
१८४ कुच शब्दे तारे ।
१८५ कुन्च ।
१८६ क्रुन्च कौटिल्याल्पीभावयोः
१८७ लुन्च अपनयने ।
१८८ अन्चु गतिपूजनयोः ।
१८९ वन्चु ।
१९० चन्चु ।
१९१ तन्चु ।
१९२ त्वन्चु ।
१९३ म्रुन्चु ।
१९४ म्लुन्चु ।
१९५ म्रुचु ।
१९६ म्लुचु गत्यर्थाः ।
१९७ ग्रुचु ।
१९८ ग्लुचु ।
१९९ कुजु ।
२०० खुजु स्तेयकरणे ।

१८६ कौटिल्यं—कुटिलता अल्पीभावः—न्यूनीभवनम् ।
१८७ अपनयनं—दूरीकरणम् ।
२०० स्तेयकरणम्-चौर्य्यापारः ।

२०१ ग्लुन्चु ।
२०२ षस्ज गतौ । ( षस्जिरात्मनेपद्यपि )।
२०३ गुजि अव्यक्ते शब्दे ।
२०४ अर्च पूजायाम् ।
२०५ म्लेछ अव्यक्ते शब्दे ।
२०६ लछ ।
२०७ लाछि लक्षणे ।
२०८ वाछि इच्छायाम् ।
२०९ आछि आयामे ।
२१० ह्रीछ लज्जायाम् ।
२११ हुर्छा कौटिल्ये ।
२१२ मुर्छा मोहसमुच्छ्राययोः।
२१३ स्फुर्छा विस्तृतौ ।
२१४ युछ प्रमादे ।
२१५ उछि उञ्छे ।
२१६ उछी विवासे ।
२१७ ध्रज ।
२१८ ध्रजि ।

२०७ लक्षणम्—चिह्नम् ।
२०९ आयामः—दैर्घ्यम् ।
२१० लज्जा—व्रीडा ।
२१२ मोहः—अविवेकः—समुच्छ्रायः, समुन्नतिः ।
२१३ विस्तृतिः—विस्तारः ।
२१४ प्रमादः—अनवधानता ।
२१५ उञ्छः—कणश आदानम् ।
२१६ विवासः—समाप्तिः ।

२१९ धृज ।
२२० धृजि ।
२२१ ध्वज ।
२२२ ध्वजि गतौ । ( ध्रिज च )
२२३ कूज अव्यक्ते शब्दे ।
२२४ अर्ज
२२५ षर्ज अर्जने ।
२२६ गर्ज शब्दे।
२२७ तर्ज भर्त्सने ।
२२८ कर्ज व्यथने ।
२२९ खर्ज पूजने च ।
२३० अज गतिक्षेपणयोः ।
२३१ तेज पालने ।
२३२ खज मन्थे । ( कज मद इत्येके )।
२३३ खजि गतिवैकल्ये ।
२३४ एजृ कम्पने ।
२३५ टुओस्फूर्जा वज्रनिर्घोषे ।
२३६ क्षि क्षये।
२३७ क्षीज अव्यक्ते शब्दे ।

२२७ भर्त्सनम्—अपकारः ।
२२८ व्यथनम्—भयं-सञ्चलनञ्च ।
२३२ मन्थः—विलोडनम् ।
२३३ गतिवैकल्यम्—गमनविकलता ।
२३५ वज्रनिर्घोषः—वज्रशब्दः ।
२३६ क्षयः—नाशः ।
भर्जनम्—अस्यार्थ उक्तः ।

२३८ लज
२३९ लजि भर्जने ।
२४० लाज
२४१ लाजि भर्त्सने च ।
२४२ जज
२४३ जजि युद्धे ।
२४४ तुज हिंसायाम् ।
२४५ तुजि पालने ।
२४६ गज
२४७ गजि
२४८ गृज
२४९ गृजि
२५० मुज
२५१ मुजि शब्दार्थाः । गज मदने च ।
२५२ वज
२५३ व्रज गतौ । शुचादय उदात्ता उदात्तेतः (क्षिवर्जं) परस्मैभाषाः ॥ अथ टवर्गीयान्ताश्शाडन्ताः आत्मनेपदिनः षट्त्रिंशत् ॥
२५४ अट्ट अतिक्रमहिंसयोः
२५५ वेष्ट वेष्टने ।
२५६ चेष्ट चेष्टायाम् ।
२५७ गोष्ट
२५८ लोष्ट सङ्घाते ।
२५९ घट्ट चलने ।
२६० स्फुट विकसने ।
२६१ अठि गतौ ।
२६२ वठि एकचर्यायाम् ।
२६३ मठि
२६४ कठि शोके ।
२६५ मठि पालने ।
२६६ हेठ विबाधायाम् ।
२६७ एठ च ।
२६८ हिडि गत्यनादरयोः ।
२६९ हुडि सङ्घाते ।
२७० कुडि दाहे ।
२७१ बडि विभाजने ।
२७२ मडि च ।
२७३ भडि परिभाषणे ।

---

२४४ हिंसा –प्राणिवियोगानुकूलव्यापारः ।
२४५ पालनं -रक्षणम् ।
२५१ मदनम्—मदः—चित्तविकारः ।
२५४ अतिक्रमः-जयः ।
२५५ वेष्टनम्-परिवेष्टनम् ।
२५६ चेष्टा—शरीरव्यापारः ।
२५७ संघातः—समूहः ।
२६० विकसनम्—अवयवविभागः ।
२६२ एकचर्या—सहायं विना चरणम् ।
२६३ शोकः–इह आध्यानम् ।
२६६ विबाधः—विशेषेण बाधा शाठ्यम् ।
२६८–अनादरः-तिरस्कारः ।
२७० दाहः–भस्मीकरणम् ।
२७१ विभाजनम्–विभागः ।
२७३ परिभाषणम्—परिहासः—सनिन्दोपालम्भश्च ।

२७४ पिडि सङ्घाते ।
२७५ मुडि मार्जने ।
२७६ तुडि तोडने ।
२७७ हुडि वरणे ॥ हरण इत्येके ॥ ( स्फुडि विकसने ) ।
२७८ चडि कोपे ।
२७९ शडि रुजायां सङ्घाते च ।
२८० तडि ताडने ।
२८१ पडि गतौ ।
२८२ कडि मदे ।
२८३ खडि मन्थे ।
२८४ हेडृ
२८५ होडृ अनादरे ।
२८६ वाडृ आप्लाव्ये ।
२८७ द्राडृ
२८८ ध्राडृ विशरणे ।
२८९ शाडृ श्लाघायाम् ॥ अष्टादश उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ अथ टवर्गीयान्तसमाप्तेः परस्मैपदिनः पञ्चाशत् ॥
२९० शौटृ गर्वे ।
२९१ यौटृ बन्धे ।
२९२ म्लेटृ
२९३ म्रेडृ उन्मादे ।
२९४ कटे वर्षावरणयोः ॥ चटे इत्येके ॥
२९५ अट
२९६ पट गतौ ।
२९७ रट परिभाषणे ।
२९८ लट बाल्ये ।
२९९ शट रुजाविशरणगत्यवसादनेषु ।
३०० वट वेष्टने ।
३०१ किट

२७५ मार्जनम्–शुद्धि र्न्यग्भावश्च ।
२७६ तोडनम्–प्रतिघातः ।
२७७ वरणम्—स्वीकारः ।
२७९ रुजा–रोगः ।
२८० ताडनम्—आघातः ।
२८२ मदः–चित्तविकारः ।
२८३ मन्थः–विलोडनम् ।
२८४ अनादरः परिभवः ।
२८६ आप्लाव्यम्–आप्लवः ( उत्प्लवः )
२८७ विशरणम्—अवयवविभागः ।
२८९ श्लाघा–आत्मप्रशंसा ।
२९० गर्वः–अभिमानः ।
२९२–उन्मादः–चित्तविकारः ।
२९४ आवरणम्—आच्छादनम् ।
२९७ परिभाषणम् । परिहासः–सनिन्दोपालम्भश्च ।
२९८ बाल्यम्–बालभावः– ( शिशुत्वम् )
२९९ रुजा–रोगः–विशरणम्–अवयवविभागः । अवसादनम्—दुःखम् ।
३०१ त्रासः––भयम् ।

३०२ खिट त्रासे ।
३०३ शिट
३०४ षिट अनादरे ।
३०५ जट
३०६ झट सङ्घाते ।
३०७ भट भृतौ ।
३०८ तट उच्छ्राये ।
३०९ खट काङ्क्षायाम् ।
३१० णट नृत्तौ ।
३११ पिट शब्दसंघातयोः ।
३१२ हट दीप्तौ ।
३१३ षट अवयवे ।
३१४ लुट विलोडने । डान्तोऽयमित्येके ।
३१५ चिट परप्रेष्ये ।
३१६ विट शब्दे ।
३१७ बिट आक्रोशे । हिट इत्येके ॥
३१८ इट
३१९ किट
३२० कटी गतौ ।
३२१ मडि भूषायाम् ।
३२२ कुडि वैकल्ये । कुटीत्येके ।
३२३ मुड
३२४ प्रुड मर्दने ।
३२५ चुडि अल्पीभावे ।
३२६ मुडि खण्डने ॥ पुडि चेत्येके ॥
३२७ रुटि
३२८ लुटि स्तेये ॥ रुठि लुठि इत्येके । रुडि लुडि इत्यपरे ॥
३२९ स्फुटिर् विशरणे ॥ स्फुटि इत्यपि केचित् ॥
३३० पठ व्यक्तायां वाचि ।
३३१ वठ स्थौल्ये ।
३३२ मठ मदनिवासयोः ।
३३३ कठ कृच्छ्रजीवने ।
३३४ रट परिभाषणे । रठ इत्येके ।
३३५ हठ प्लुतिशठत्वयोः ॥ बलात्कार इत्यन्ये ॥
३३६ रुठ
३३७ लुठ
३३८ उठ उपघाते ॥ ऊठ इत्येके
३३९ पिठ हिंसासंक्लेशनयोः ।

---

३०४ अनादरः—तिरस्कारः ।
३०७ भृतिः—भरणम् ।
३१५ परप्रेष्यः—प्रेषणम् ।
३१७ आक्रोशः—विरुद्धानुध्यानम् ।
३२४ मर्दनम्—तोडनम् ।
३२६ खण्डनम्—छेदनम् ।
३३१ स्थौल्यम्—पुष्टता ।
३३२ मदः—चित्तविकारः ।
३३५ प्लुतिः—प्लवनम् । शठत्वं क्रौर्यम् ।

३४० शठ कैतवे च।
३४१ शुठ गतिप्रतिघाते ॥ शुठि-इति स्वामी।
३४२ कुठि च।
३४३ लुठि आलस्ये प्रतिघाते च॥
३४४ शुठि शोषणे।
३४५ रुठि
३४६ लुठि गतौ।
३४७ चुड्ड भावकरणे।
३४८ अड्ड अभियोगे।
३४९ कड्ड कार्कश्ये ॥ चुड्डादयस्त्रयो दोपधाः ॥
३५० क्रीडृ विहारे।
३५१ तुडृ तोडने ॥ तूडृ इत्येके ॥
३५२ हुडृ
३५३ हूडृ
३५४ होडृ गतौ।
३५५ रौडृ अनादरे।
३५६ रोडृ
३५७ लोडृ उन्मादे।
३५८ अड उद्यमे।

---

३४० कैतवम्—धौर्त्यम्।
३४७ भावकरणम् -अभिप्रायसूचनम्।
३४९ कार्कश्यम्—काठिन्यम्।
३५१ तोडनम्—दारणं हिंसनं च।
३५६ उन्मादः—चित्तविभ्रमः।
३५८ उद्यमः—उद्योगः।

३५९ लड विलासे ॥ लल इत्येके ॥
३६० कड मदे ॥ कडि इत्येके ॥
३६१ गडि वदनैकदेशे ॥ शौटादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ अथ पवर्गीयान्ता आत्मनेपदिनः स्तोभत्यन्ताश्चतुस्त्रिंशत् ॥
३६२ तिपृ
३६३ तेपृ
३६४ ष्टिपृ
३६५ ष्टेपृ क्षरणार्थाः ॥ आद्योऽनुदात्तः ॥ तेपृ कम्पने च ॥
३६६ ग्लेपृ दैन्ये।
३६७ टुवेपृ कम्पने।
३६८ केपृ।
३६९ गेपृ
३७० ग्लेपृ च।
३७१ मेपृ
३७२ रेपृ
३७३ लेपृ गतौ।
३७४ त्रपूष् लज्जायाम्।
३७५ कपि चलने।
३७६ रबि

---

३५९ विलासः—क्रीडा।
३६० मदः—दर्पः।
३६६ दैन्यम्—खेदः।

३७७ लबि
३७८ अबि शब्दे ।
३७९ लबि अवस्रंसने च ।
३८० कबृ वर्णे ।
३८१ क्लीबृ अधार्ष्ट्ये ।
३८२ क्षीबृ मदे ।
३८३ शीभृ कत्थने
३८४ चीभृ च ।
३८५ रेभृ शब्दे ॥ अभिरभी क्वचित्पठ्येते ॥ लभि च ।
३८६ ष्टभि
३८७ स्कभि प्रतिबन्धे ।
३८८ जभी
३८९ जृभि गात्रविनामे ।
३९० शल्भ कत्थने ।
३९१ वल्भ भोजने ।
३९२ गल्भ धार्ष्ट्ये ।
३९३ श्रम्भु प्रमादे ॥ दन्त्यादिश्च
३९४ ष्टुभु स्तम्भे ॥ तिप्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ तिपिस्तवनुदात्तः ॥ अथ पवर्गीयान्ताः परस्मैपदिनः एकचत्वारिंशत् ॥
३९५ गुपू रक्षणे ।
३९६ धूप सन्तापे ।
३९७ जप
३९८ जल्प व्यक्तायां वाचि । जप मानसे च ॥
३९९ चप सान्त्वने ।
४०० षप समवाये ।
४०१ रप
४०२ लप व्यक्तायां वाचि ।
४०३ चुप मन्दायां गतौ ।
४०४ तुप
४०५ तुम्प
४०६ त्रुप
४०७ त्रुम्प
४०८ तुफ
४०९ तुम्फ
४१० त्रुफ
४११ त्रुम्फ हिंसार्थाः ।
४१२ पर्प
४१३ रफ
४१४ रफि

---

३७९ अवस्रंसनम्—अधः पतनम् ।
३८१ अधार्ष्ट्यम्—अधृष्टता (अप्रगल्भता ।
३८३ कत्थनम्—श्लाघा ।
३८७ प्रतिबन्धः—अवरोधः ।
३८९ गात्रविनामः—तन्द्रया मुखव्यादानम् ।
३९२ धार्ष्ट्यम्—धृष्टता ।
३९६ सन्तापः—दुःखम् ।
३९९ सान्त्वनम्— शान्तिः ।
४०० समवायः—सम्बन्धः(सम्यगवबोधो वा)

४१५ अर्व
४१६ पर्व
४१७ लर्व
४१८ वर्व
४१९ मर्व
४२० कर्व
४२१ खर्व
४२२ गर्व
४२३ शर्व
४२४ षर्व
४२५ चर्व गतौ ।
४२६ कुबि आच्छादने ।
४२७ लुबि ।
४२८ तुबि अर्दने ।
४२९ चुबि वक्त्रसंयोगः ।
४३० पुभु
४३१ षुम्भु हिंसार्थौ । षिभु षिम्भु इत्येके ॥
४३२ शुभ
४३३ शुम्भ भाषणे । भासन इत्येके ॥ हिंसायामित्यन्ये॥ गुपादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ अथ अनुनासिकान्ताः कम्यन्ताः आत्मनेपदिनो दश ॥
४३४ घिणि ।
४३५ घुणि
४३६ घृणि ग्रहणे ।
४३७ घुण
४३८ घूर्ण भ्रमणे ।
४३९ पण व्यवहारे स्तुतौ च ।
४४० पन च ।
४४१ भाम क्रोधे ।
४४२ क्षमूष् सहने ।
४४३ कमु कान्तौ ॥ घिण्यादय उदात्ता अनुदात्तेतः आत्मनेभाषाः ॥ अथ क्रम्यन्ताः परस्मैपदिनः त्रिंशत् ॥
४४४ अण
४४५ रण
४४६ वण ।
४४७ भण ।
४४८ मण
४४९ कण ।
४५० क्वण
४५१ व्रण
४५२ भ्रण
४५३ ध्वण शब्दार्थाः ॥ धण इत्यपि केचित् ॥

---

४२६ आच्छादनम्—आवरणम् ।
४२७ अर्दनम् । पीडनम् ।
४२९ वक्त्रसंयोगः—चुम्बनम् ।
४३७ भ्रमणम्—इतस्ततश्चलनम् ।

४५४ ओणृ अपनयने ।
४५५ शोणृ वर्णगत्योः ।
४५६ श्रोणृ सङ्घाते ।
४५७ श्लोणृ च ।
४५८ पैणृ गतिप्रेरणश्लेषणेषु ( लैणृ इत्यपि ) ।
४५९ भ्रन शब्दे । वण इत्यपि केचित् ॥
४६० कनी दीप्तिकान्तिगतिषु ।
४६१ ष्टन
४६२ वन शब्दे ।
४६३ वन ।
४६४ षण सम्भक्तौ ।
४६५ अम गत्यादिषु ।
४६६ द्रम
४६७ हम्म
४६८ मीमृ गतौ । मीमृ शब्दे च ॥
४६९ चमु ।
४७० छमु ।
४७१ जमु ।
४७२ झमु अदने । जिमु इति केचित् ।

४७३ क्रमु पादविक्षेपे ॥ अनादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ अथ रेवत्यन्ता आत्मनेपदिनश्चत्वारिंशत् ॥
४७४ अय
४७५ वय
४७६ पय
४७७ मय
४७८ चय
४७९ तय
४८० णय गतौ ।
४८१ दय दानगतिरक्षणहिंसादानेषु ।
४८२ रय गतौ । लय च ॥
४८३ ऊयी तन्तुसन्ताने ।
४८४ पूयी विशरणे दुर्गन्धे च ।
४८५ क्नूयी शब्दे उन्दे च ।
४८६ क्ष्मायी विधूनने ।
४८७ स्फायी
४८८ ओप्यायी वृद्धौ ।
४८९ तायृ सन्तानपालनयोः ।
४९० शल चलनसंवरणयोः ।

---

४५४ अपनयनम्—दूरीकरणम् ।
४५८ प्रेरणम्—प्रपणं । श्लेषणं सम्बन्धः
४६३ संभक्ति—सम्यक्सेवनम् ।
४७१ अदनम्—भक्षणम् ।
४७३ पादविक्षेपः—चरणसंचालनम् ।
४८३ तन्तुसन्तानम्—तन्तुविस्तारः ।
४८४ विशरणम्—अवयवविभागः
४८५ उन्दः—क्लेदनम् ।
४८६ विधूननम्—कम्पनम् ।

४९१ वल
४९२ वल्ल संवरणे सञ्चरणे च ।
४९३ मल
४९४ मल्ल धारणे ।
४९५ भल
४९६ भल्ल परिभाषणहिंसादानेषु।
४९७ कल शब्दसङ्ख्यानयोः ।
४९८ कल्ल अव्यक्ते शब्दे । अशब्द इति स्वामी ॥
४९९ तेवृ
५०० देवृ देवने ।
५०१ षेवृ
५०२ गेवृ
५०३ ग्लेवृ
५०४ पेवृ
५०५ मेवृ ।
५०६ म्लेवृ सेवने ॥ शेवृ खेवृ क्लेवृ इत्येके ॥
५०७ रेवृ प्लवगतौ ॥ अयादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ अथावत्यन्ताः परस्मैपदिनः एकनवतिः ॥
५०८ मव्य बन्धने ।

४९७ संख्यानम्—परिगणनम् ।
४९८ अशब्दः—तूष्णीम्भावः ।
४९९ देवनम्—दुःखम् ।

५०९ सूर्क्ष्य
५१० ईर्क्ष्य
५११ ईर्ष्य ईर्ष्यार्थाः ।
५१२ हय गतौ ।
५१३ शुच्य अभिषवे । चुच्य इत्येके ॥
५१४ हर्य गतिकान्त्योः ।
५१५ अल भूषणपर्याप्तिवारणेषु ॥ अयं स्वरितेदित्येके ॥
५१६ ञिफला विशरणे ।
५१७ मील
५१८ श्मील
५१९ स्मील
५२० क्ष्मील निमेषणे ।
५२१ पील प्रतिष्टम्भे ।
५२२ नील वर्णे ।
५२३ शील समाधौ ।
५२४ कील बन्धने ।
५२५ कूल आवरणे ।

५१३ अभिषवः—स्नपनं स्नानं सुरासन्धानञ्च ।
५१५ भूषणम्—अलङ्करणम् । पर्याप्तिः । पूर्णता—वारणं । निषेधः ।
५१६ विशरणम्—अवयवविभागः ।
५१७ निमेषणम्—सङ्कोचः ।
५२१ प्रतिष्टम्भः—अवरोधः । निरोधः ।
५२३ समाधि—चित्तवृत्तिनिरोधः ।
५२५ आवरणम्—आच्छादनम् ।

५२६ शूल रुजायां सङ्घोषे च ।
५२७ तूल निष्कर्षे ।
५२८ पूल सङ्घाते ।
५२९ मूल प्रतिष्ठायाम् ।
५३० फल निष्पत्तौ ।
५३१ चुल्ल भावकरणे ।
५३२ फुल्ल विकसने ।
५३३ चिल्ल शैथिल्ये भावकरणे च ।
५३४ तिल गतौ । तिल्ल इत्येके ॥
५३५ वेल्ल
५३६ चेल्ल
५३७ केल्ल
५३८ खेल्ल
५३९ क्ष्वेल्ल
५४० वेल्ल चलने ।
५४१ पेल्ल
५४२ फेल्ल
५४३ शेल्ल गतौ । षेल्ल इत्येके ॥
५४४ स्खल सञ्चलने ।
५४५ खल सञ्चये ।
५४६ गल अदने ।
५४७ षल गतौ ।
५४८ दल विशरणे ।
५४९ श्वल
५५० श्वल्ल आशुगमने ।
५५१ खोल्ल
५५२ खोॠ गतिप्रतिघाते ।
५५३ धोॠ गतिचातुर्ये ।
५५४ त्सर छद्मगतौ ।
५५५ क्मर हूर्च्छने ।
५५६ अभ्र
५५७ वभ्र
५५८ मभ्र
५५९ चर गत्यर्थाः ॥ चरतिर्भक्षणेऽपि ॥
५६० ष्ठिवु निरसने ।
५६१ जि जये ।
५६२ जीव प्राणधारणे ।
५६३ पीव

---

५२६ रुजा—रोगः—
५२७ निष्कर्षः—निष्कोषणं तद्यान्तर्गतस्य वहिर्निः सारणम् ।
५३० निष्पत्तिः— पूर्णता—सिद्धिः ।
५३१ भावकरणम्—अभिप्रायसूचनम् ।
५४५ सञ्चयः—सङ्ग्रहः—एकत्रीकरणम् ।
५४९ आशुगमनम्—शीघ्रगतिः ।
५५२ गतिप्रतिघातः—गमननिरोधः ।
५५३ गतिचातुर्यम्—गमननैपुण्यम्
५५४ छद्मगतिः—कपटगमनम् ।
५५५ हुर्छनम्—कौटिल्यम् ।
५६० निरसनम्—थूत्कीकरणम् ।
५६२ प्राणधारणम् जीवनम् ।
५६३ स्थौल्यम्—पीवरत्वम् ।

५६४ मीव
५६५ तीव
५६६ णीव स्थौल्ये ।
५६७ क्षीवु ।
५६८ क्षेवु निरसने ।
५६९ उर्वी ।
५७० तुर्वी ।
५७१ थुर्वी ।
५७२ दुर्वी ।
५७३ धुर्वी हिंसार्थाः ।
५७४ गुर्वी उद्यमने ।
५७५ मुर्वी बन्धने ।
५७६ पुर्व ।
५७७ पर्व ।
५७८ मर्व पूरणे ।
५७९ चर्व अदने ।
५८० भर्व हिंसायाम् ।
५८१ कर्व ।
५८२ खर्व ।
५८३ गर्व दर्पे ।
५८४ अर्व ।
५८५ शर्व ।
५८६ षर्व हिंसायाम् ।
५८७ इवि व्याप्तौ ।
५८८ पिवि ।
५८९ मिवि ।
५९० णिवि सेचने । ( षिवीत्येके ) । सेवन इति तरङ्गिण्याम् ॥
५९१ हिवि ।
५९२ दिवि ।
५९३ धिवि ।
५९४ जिवि प्रीणनार्थाः ।
५९५ रिवि ।
५९६ रवि ।
५९७ धवि गत्यर्थाः ।
५९८ कृवि हिंसाकरणयोश्च ।
५९९ मव बन्धने ।
६०० अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु ॥ मव्यादय उदात्ता उदात्तेतः

५६७ निरसनम्—थूत्कीकरणम् ।
५७४ उद्यमनम्—उद्योगः ।
५७५ बन्धनम्—निरोधः ।
५७६ पूरणम्—तृप्तिः ।
५७८ अदनम्—चर्वणम् ।
५८१ दर्पः—अहङ्कारः ।
५८७ व्याप्तिः—व्यापनम् ।
५८८ सेचनम्—आर्द्रीभवनम् ।
५९४ प्रीणनम्—जीवनम् ।
६०० अवगमः—ज्ञानम्

परस्मैभाषाः ॥ जिस्त्वनुदात्तः ॥

६०१ धावु गतिशुद्ध्योः ॥ उदात्तः स्वरितेदुभयतोभाषः ॥ अथोष्मान्ता आत्मनेपदिनो द्विपञ्चाशत् ॥

६०२ धुक्ष ।

६०३ धिक्ष संदीपनक्लेशनजीवनेषु ।

६०४ वृक्ष वरणे ।

६०५ शिक्ष विद्योपादाने ।

६०६ भिक्ष भिक्षायामलाभे लाभे च ।

६०७ क्लेश अव्यक्तायां वाचि । बाधन इति दुर्गः ॥

६०८ दक्ष वृद्धौ शीघ्रार्थे च ।

६०९ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु ।

६१० ईक्ष दर्शने ।

६११ ईष गतिहिंसादर्शनेषु ।

६१२ भाष व्यक्तायां वाचि ।

६१३ वर्ष स्नेहने ।

६१४ गेषृ अन्विच्छायाम् । ग्लेषृ इत्येके ॥

६१५ पेषृ प्रयत्ने । ( एषृ इत्येके । येषृ इत्यप्यन्ये ) ।

६१६ जेषृ ।

६१७ णेषृ ।

६१८ एषृ ।

६१९ प्रेषृ गतौ ।

६२० रेषृ ।

६२१ हेषृ ।

६२२ ह्लेषृ अव्यक्ते शब्दे ।

६२३ कासृ शब्दकुत्सायाम् ।

६२४ भासृ दीप्तौ ।

६२५ णासृ ।

६२६ रासृ शब्दे ।

६२७ णस कौटिल्ये ।

---

अवाप्तिः—प्राप्तिः ।
आलिङ्गनम्—मिलनम् ।
भागः—विभागः ।
६०१ शुद्धिः—पवित्रता ।
६०२ सन्दीपनम्—ज्वलनम् ।
क्लेशनम्—क्लेशः ।
जीवनम्—प्राणधारणम् ।
६०४ वरणम्—स्वीकारः ।
६०५ विद्योपादानम्—विद्याग्रहणम् ।
६०६ अलाभः—अप्राप्तिः ।
लाभः—प्राप्तिः ।

६०९ मौण्ड्यम्—केशवपनम् ।
इज्या—यागः
उपनयनम्—व्रतबन्धः ।
नियमः—संयमः ।
व्रतम्—उपवासः ।
आदेशः—आज्ञा—( निदेशः )
६१३ स्नेहनम्—चिक्कणम् ।
६१४ अन्विच्छा—अन्वेषणम् ।

६२८ भ्यस भये ।
६२९ आङः शसि इच्छायाम् ।
६३० ग्रसु ।
६३१ ग्लसु अदने ।
६३२ ईह चेष्टायाम् ।
६३३ बंहि ।
६३४ मंहि वृद्धौ । ( बंहीत्येके )
६३५ अंहि गतौ ।
६३६ गर्ह ।
६३७ गल्ह कुत्सायाम् ।
६३८ बर्ह ।
६३९ बल्ह प्राधान्ये ।
६४० वर्ह ।
६४१ वल्ह परिभाषणहिंसाच्छादनेषु ।
६४२ प्लिह गतौ ।
६४३ वेहृ ( बेहृ ) ।
६४४ जेहृ
६४५ वाहृ ( बाहृ ) प्रयत्ने । जेहृ गतावपि ॥
६४६ द्राहृ निद्राक्षये ॥ निक्षेप इत्येके ॥
६४७ काशृ दीप्तौ ।
६४८ ऊह वितर्के ।
६४९ गाहू विलोडने ।
६५० गृहू ग्रहणे ।
६५१ ग्लहच ।
६५२ घुषि कान्तिकरणे । घष इति केचित । घुक्षादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ गृहिस्तु वेट् । अथ अर्हत्यन्ताः परस्मैपादिन एकनवतिः ॥
६५३ घुषिर् अविशब्दने । शाब्द इति अन्ये पेठुः ॥
६५४ अक्षू व्याप्तौ ।
६५५ तक्षू
६५६ त्वक्षू तनूकरणे ।
६५७ उक्ष सेचने ।
६५८ रक्ष पालने ।
६५९ णिक्ष चुम्बने ।
६६० त्रक्ष
६६१ ष्ट्रक्ष ( तृक्ष ष्ट्रक्ष )
६६२ णक्ष गतौ ।
६६३ वक्ष रोषे । सङ्घात इत्येके ।

---

६४० परिभाषणम् -अनृतभाषणम् ।
आच्छादनम्—आवरणम् ।
६४६ निद्राक्षयः—निद्राभङ्गः ( जागरणम् )
६४८ वितर्कः—विचारः ।
६४९ विलोडनम्—प्रतीघातः ।
६५३ अविशब्दनम्—अप्रतिज्ञानम् ।
६५५ तनूकरणम्—तीक्ष्णीकरणम् ।

६६४ मृक्ष सङ्घाते। म्रक्ष इत्येके।
६६५ तक्ष त्वचने। पक्ष परिग्रह इत्यके।
६६६ सूर्क्ष आदरे। षूर्क्ष इति केचित्।
६६७ काक्षि
६६८ वाक्षि
६६९ माक्षि काङ्क्षायाम्।
६७० द्राक्षि
६७१ ध्राक्षि
६७२ ध्वाक्षि घोरवासिते च।
६७३ चूष पाने।
६७४ तुष तुष्टौ।
६७५ पूष वृद्धौ।
६७६ मूष स्तेये।
६७७ लूष
६७८ रूष भूषायाम्।
६७९ शूष प्रसवे।
६८० यूष हिंसायाम्।
६८१ जूष च।
६८२ भूष अलङ्कारे।
६८३ ऊष रुजायाम्।
६८४ इष उञ्छे।
६८५ कष
६८६ खष
६८७ शिष
६८८ जष
६८९ झष
६९० शष
६९१ वष
६९२ मष
६९३ रुष
६९४ रिष हिंसार्थाः।
६९५ भष भर्त्सने।
६९६ उष दाहे।
६९७ जिषु
६९८ विषु
६९९ मिषु सेचने।
७०० पुष पुष्टौ।
७०१ श्रिषु
७०२ श्लिषु
७०३ प्रुषु
७०४ प्लुषु दाहे।

---

६६५ त्वचनम्—संवरणम्—त्वचोग्रहणञ्च।
६६६ आदरः—सत्कारः।
६६७ काङ्क्षा—इच्छा।
६७० घोरवासितम्—घोरशब्दः।
६७९ प्रसवः—अभ्यनुज्ञानम्।
६८३ रुजा—पीडा।
६८४ उञ्छः—कणशः आदानं कणशाद्यर्जनं शिलम्।
६९५ भर्त्सनम्—रवरवः।
७०१ दाहः—भस्मीकरणम्।

७०५ पृषु
७०६ वृषु
७०७ मृषु सेचने । मृषु सहने च । इतरौ हिंसासंक्लेशनयोश्च ॥
७०८ घृषु सङ्घर्षे ।
७०९ हृषु अलीके ।
७१० तुस
७११ ह्रस
७१२ ह्लस
७१३ रस शब्दे ।
७१४ लस श्लेषणक्रीडनयोः ।
७१५ घस्लृ अदने ।
७१६ जर्ज
७१७ चर्च
७१८ झर्झ परिभाषणहिंसातर्जनेषु ।
७१९ पिसृ
७२० पेसृ गतौ ।
७२१ हसे हसने ।

७०७ सेचनम्—आर्द्रीकरणम् ।
सहनम्—मर्षणम् ।
७०८ संघर्षः— पराभिभवेच्छा ।
७०९ अलीकम्—मिथ्याभाषणम् ।
७१४ श्लेषणम्—आलिङ्गनम् ।
७१६ परिभाषणम्—अनृतभाषणम् ।
तर्जनम्—भर्त्सनम् ।

७२२ णिश समाधौ ।
७२३ मिश
७२४ मश शब्दे रोषकृते च ।
७२५ शव गतौ ।
७२६ शश प्लुतगतौ ।
७२७ शसु हिंसायाम् ।
७२८ शंसु स्तुतौ । दुर्गताविति दुर्गः
७२९ चह परिकल्कने ।
७३० मह पूजायाम् ।
७३१ रह त्यागे ।
७३२ रहि गतौ ।
७३३ दृह
७३४ दृहि
७३५ बृह
७३६ बृहि वृद्धौ बृहि शब्दे च । बृहिर् चेत्यके
७३७ तुहिर्
७३८ दुहिर्
७३९ उहिर् अर्दने ।
७४० अर्ह पूजायाम् ॥ घुषिरादय उदात्ता उदात्तेतःप-

७२२ समाधिः—चित्तवृत्तिनिरोधः ।
७२६ प्लुतगतिः—उत्प्लुत्यगमनम् ।
७२९ परिकल्कनम्-दम्भः शाठ्यंच ।
७३७ अर्दनम्—पीडनम् ।
७४१ दीप्तिः—प्रकाशः ।

५३ अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ।
५४ सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुटिभूभ्य इलच् ।
५५ कमेः पश्च ।
५६ गुपादिभ्यः किन् ।
५७ मिथिलादयश्च ।
५८ पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ।
५९ कुम्बेर्नलोपश्च ।
६० शदेस्त च ।
६१ मूलेरादयः ।
६२ कबरोतः पश्च ।
६३ भातेर्डवतुः ।
६४ कठिचकिभ्यामोरन् ।
६५ किशोरादयश्च ।
६६ कपिगडिगण्डिकटिपटिभ्य ओलच् ।
६७ मीनातेरूरन् ।
६८ स्यन्देः सम्प्रसारणं च ।
६९ सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्
७० पः किच्च ।
७१ अर्तेश्चतुः ।
७२ कमिमनिजनिगाभायाहिभ्यश्च ।
७३ चायः किः ।
७४ आप्नोतेर्ह्रस्वश्च ।
७५ वसेस्तुन् ।
७६ अगारे णिच्च ।
७७ कृञः क्तुः ।
७८ पधिवह्योश्च तुः ।
७९ जीवेरातुः ।
८० आतृकन्वृद्धिश्च ।
८१ कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ।
८२ मृजेर्गुणश्च ।
८३ वहो धश्च ।
८४ कषेश्छश्च ।
८५ णित्कसिपद्यर्तेः ।
८६ अणो डश्च ।
८७ नञि लम्बेर्नलोपश्च ।
८८ के श्र एरङ् चास्य ।
८९ त्रो दुट् च ।
९० दरिद्रातेर्यालोपश्च ।
९१ नृतिशृध्योः कूः ।
९२ ऋतेरम् च ।
९३ अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः ।
९४ मृग्रोरुतिः ।
९५ ग्रो मुट् च ।
९६ हृषेरुलच् ।
९७ हृसृरुहियुषिभ्य इतिः ।

९८ ताडेर्णिलुक् च ।
९९ शमेर्ढः ।
१०० कमेरठः
१०१ रमेर्वृद्धिश्च ।
१०२ शमेः खः ।
१०३ कणेष्ठः ।
१०४ कलस्तृपश्च ।
१०५ शपेर्बश्च ।
१०६ वृषादिभ्यश्चित् ।
१०७ मृजेष्टिलोपश्च ।
१०८ चुपेरच्चोपधायाः ।
१०९ शकिशम्योर्नित् ।
११० छो गुग्घ्रस्वश्च ।
१११ अमन्ताड्डः ।
११२ कादिभ्यः कित् ।
११३ स्थाचतिमृजेरालज्वलञालीयचः ।
११४ पतिचण्डिभ्यामालञ् ।
११५ तमिविशिबिडिमृणिकुलिकपिपालिपक्षिभ्यः कालन् ।
११६ पतेरङ्गच्पक्षिणि ।
११७ तरत्यादिभ्यश्च ।
११८ बिडादिभ्यः कित् ।
११९ सुवृञोर्वृद्धिश्च ।
१२० गन्तस्यद्योः ।
१२१ छापूखडिभ्यः कित् ।
१२२ भृञः किन्नुट् च ।
१२३ शृणातेर्ह्रस्वश्च ।
१२४ गणशकुनौ ।
१२५ मुर्दिम्रोर्गग्गौ ।
१२६ अण्डन्कृसृभृवृञः ।
१२७ शृदृभसोऽदिः ।
१२८ दृणातेः षुग्घ्रस्वश्च ।
१२९ त्यजितनियजिभ्यो डित् ।
१३० पतेस्तुट् च ।
१३१ सर्तेरटिः ।
१३२ लंघेर्नलोपश्च ।
१३३ पारयतेराजिः ।
१३४ प्रथः कित्सम्प्रसारणं च ।
१३५ भियः षुग्घ्रस्वश्च ।
१३६ युष्यसिभ्यां मदिक् ।
१३७ अर्तिस्तुसुहुसृधुक्षिक्षुभायावापदियक्षिनीभ्यो मन् ।
१३८ जहातेः सन्वदालोपश्च ।
१३९ अवतेष्टिलोपश्च ।
१४० ग्रसेरा च ।
१४१ अविसिविसिशुषिभ्यः कित् ।
१४२ इषियुधीन्धिदसिश्याधुसूभ्यो मक् ।
१४३ युजिरुचितिजां कुश्च ।
१४४ हन्तेर्हि च ।
१४५ भियः षुग्वा ।

१४६ घर्मः।
१४७ ग्रीष्मः।
१४८ प्रथेःषिवन्सम्प्रसारणं च।
१४९ अशूप्रुषिलटिकणिखटिविशिभ्यः कन्।
१५० इण्भीभ्यां वण्।
१५१ सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा अस्वतन्त्रे।
१५२ शेवयह्वजिह्वग्रीवाऽऽप्वमीवाः
१५३ कृगृशृदृभ्यो वः।
१५४ कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः।
१५५ स्वपितृषोर्नजिङ् तुट् च।
१५६ नाञि जहातेः।
१५७ श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति। इत्युणादिषु प्रथमः पादः॥
१५८ कृहृभ्यामेणुः।
१५९ हनिकुषिनीरमिकाशिभ्यः क्थन्।
१६० अवे भृञः।
१६१ उषिकुषिगार्तिभ्यस्थन्।
१६२ सर्तेर्णित्।
१६३ जॄवृभ्यामूथन्।
१६४ पातृतुदिवचिरिचिसिचिभ्यस्थक्।
१६५ अर्तेर्निरि।
१६६ निशीथगोपीथावगथाः।
१६७ गश्चोदि।
१६८ समीणः।
१६९ तिथपृष्ठगूथयूथप्रोथाः।
१७० स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्।
१७१ चकिरम्योरुच्चोपधायाः।
१७२ वौ कसेः।
१७३ अमितम्योर्दीर्घश्च।
१७४ निन्देर्नलोपश्च।
१७५ अर्देर्दीर्घश्च।
१७६ शुचेर्दश्च।
१७७ दुरीणो लोपश्च।
१७८ कृतेश्छः क्रू च।
१७९ रोदेर्णिलुक् च।
१८० बहुलमन्यत्रापि संज्ञाछन्दसोः।
१८१ जोरी च।
१८२ सुसूधाग्रृधिभ्यः क्रन्।
१८३ शुसिचिमीनां दीर्घश्च।

१८४ वाविन्धेः ।
१८५ वृधिवपिभ्यां रन् ।
१८६ ऋजेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवन्रेरामालाः ।
१८७ समि कस उकन् ।
१८८ पाचिनशार्ङ्गुकम्कनुमौ च ।
१८९ भियः क्रुकन् ।
१९० क्वुन्शिल्पिसंज्ञयोरपूर्वस्यापि ।
१९१ रमेरश्च लो वा ।
१९२ जहातेर्द्वे च ।
१९३ध्मोधम च ।
१९४ हनो वध च ।
१९५ बहुलमन्यत्रापि ।
१९६ कृषेर्वृद्धिश्चोदीचाम् ।
१९७ उदकं च ।
१९८ वृश्चिकृषोः किकन् ।
१९९ प्राडिं पणिकषः ।
२०० सुषर्दीर्घश्च ।
२०१ स्यमेः सम्प्रसारणं च ।
२०२ क्रिय इकन् ।
२०३ आङि पणिपनिपतिखनिभ्यः ।
२०४ श्यास्त्याहृञविभ्य इनच् ।
२०५ वृजेः किच्च ।
२०६ अजेरज च ।
२०७ बहुलमन्यत्रापि ।
२०८ द्रुदक्षिभ्यामिनन् ।
२०९ अर्त्तः किदिच्च ।
२१० वेपितुह्योर्ह्रस्वश्च ।
२११ तलिपुलिभ्यां च ।
२१२ गर्वेरत उच्च ।
२१३ रुहेश्च ।
२१४ महेरिनण्च ।
२१५ क्विचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणंच।
२१६ आप्नातेर्ह्रस्वश्च ।
२१७ परौ व्रजेः षः पदान्ते ।
२१८ हुवः श्लुवच्च ।
२१९ स्रुवः कः ।
२२० चिक्च ।
२२१ तनोतेरनश्च वः ।
२२२ ग्लानुदिभ्यां डौः ।
२२३ चिवरव्ययम् ।
२२४ रातेर्डैः ।
२२५ गमेर्डोः ।
२२६ भ्रमेश्च डूः ।
२२७ दमेर्डोसिः ।
२२८ पणेरिजादेश्च वः ।
२२९ वशेः कित् ।
२३० भृञ ऊच्च ।
२३१ जलिसहोरुरिन् ।
२३२ युयुरुचुञो युच ।

२३३ अघोरघा च ।
२३४ उन्देर्नलोपश्च ।
२३५ गमेर्गश्च ।
२३६ बहुलमन्यत्रापि ।
२३७ रञ्जेः क्युन् ।
२३८ भूसूधूभ्रस्जिभ्यश्छन्दसि ।
२३९ कृपॄवृजिमन्दिनिधाञः क्युः
२४० धृषेर्धिष् च संज्ञायाम् ।
२४१ वर्तमाने पृषद्बृहन्महज्जगच्छतृवत् ।
२४२ संश्चत्तृपद्वेहत् ।
२४३ छन्दस्यसानच्शुजॄभ्याम् ।
२४४ ऋञ्जिवृधिमन्दिसहिभ्यः कित् ।
२४५ अर्तेर्गुणः शुट् च ।
२४६ सम्यानच स्तुवः ।
२४७ युधिबुधिदृशिभ्यः किच्च ।
२४८ हुर्छेः सनो लुक् छलोपश्च ।
२४९ श्वितेर्दश्च ।
२५० तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ।
२५१ बहुलमन्यत्रापि ।
२५२ नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृपितृदुहितृ ।
२५३ सुञ्यसेर्ऋन् ।
२५४ यतेर्वृद्धिश्च ।
२५५ नञि च नन्देः ।
२५६ दिवेर्ऋः ।
२५७ नयतेर्डिच्च ।
२५८ सव्ये स्थश्छन्दसि ।
२५९ अर्तिसृधृधम्यश्यवितृभ्योऽनिः ।
२६० आङि शुषेः सनश्छन्दसि ।
२६१ कृषेरादेश्च चः ।
२६२ अदेर्मुट् च ।
२६३ वृतेश्च ।
२६४ क्षिपेः किच्च ।
२६५ अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः ।
२६६ बृंहेर्नलोपश्च ।
२६७ द्युतेरिसिन्नादेश्च जः ।
२६८ वसौ रुचेः संज्ञायाम् ।
२६९ भुवः कित् ।
२७० सहो धश्च ।
२७१ पिबतेस्थुक् ।
२७२ जनेरुसिः ।
२७३ मनेर्धश्छन्दसि ।
२७४ अर्तिपृवपियजितनिधनितपिभ्यो नित् ।
२७५ एतेर्णिच्च ।
२७६ चक्षेः शिच्च ।
२७७ मुहेः किच्च ।
२७८ बहुलमन्यत्रापि ।

२७९ कृगृशृवृञ्चतिभ्यः ष्वरच्।
२८० नौ सदेः। इत्युणादिषु द्वितीयः पादः॥ २॥
१८१ छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः।
२८२ इण्सिञ्जिदीङुष्यविभ्यो नक्।
२८३ फेनमीनौ।
२८४ कृषेर्वर्णे।
२८५ बन्धेर्ब्रधिबुधी च।
२८६ धापृवस्यज्यतिभ्यो नः।
२८७ लक्षेरट् च।
२८८ वनेरिच्चोपधायाः।
२८९ सिवेष्टेर्यू च।
२९० कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्।
२९१ धेट इच्च।
२९२ तृषिशुषिरसिभ्यः कित्।
२९३ सुञो दीर्घश्च।
२९४ रमेस्त च।
२९५ रास्नासास्नास्थूणावीणाः।
२९६ गादाभ्यामिष्णुच्।
२९७ कृत्यशूभ्यां क्स्नः।
२९८ तिजेर्दीर्घश्च।
२९९ श्लिषेरच्चोपधायाः।
३०० यजिमनिशुन्धिदसिजनिभ्यो युच्।
३०१ भुजिमृङ्भ्यां युक्त्युकौ।
३०२ सतेरयुः।
३०३ पानीविषिभ्यः पः।
३०४ च्युवः किच्च।
३०५ स्तुवो दीर्घश्च।
३०६ सुशॄभ्यां निच्च।
३०७ कुयुभ्यां च।
३०८ खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः।
३०९ स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्।
३१० कृहनिभ्यां क्त्नुः।
३११ गमेः सन्वच्च।
३१२ दाभाभ्यां नुः।
३१३ वचेर्गश्च।
३१४ धेट इच्च।
३१५ सुवः कित्।
३१६ जहातेर्द्वेऽन्तलोपश्च।
३१७ स्थो णुः।
३१८ अजिवृरीभ्यो निच्च।
३१९ विषेः किच्च।
३२० कृदाधाराचिकलिभ्यः कः।
३२१ सृवृभूशुषिमुषिभ्यः कक्।
३२२ शुकवल्कोल्काः।
३२३ इण्भीकापाशल्यतिमर्चिभ्यः कन्।

३२४ नौ हः ।
३२५ नौ सदेर्डिच्च ।
३२६ स्यमेरीट् च ।
३२७ अजियुधुनीभ्यो दीर्घश्च ।
३२८ ह्रियो रश्च लो वा ।
३२९ शकेरुनोन्तोन्त्युनयः ।
३३० भुवो झिच् ।
३३१ कन्युच्क्षिपेश्च ।
३३२ अनुङ् नदेश्च ।
३३३ कृवृदारिभ्य उनन् ।
३३४ त्रो रश्च लो वा ।
३३५ क्षुधिपिशिमिथिभ्यः कित् ।
३३६ फलेर्गुक्च ।
३३७ अशेर्लशश्च ।
३३८ अर्जेर्णिलुक् च ।
३३९ तृणाख्यायां चित् ।
३४० अर्तेश्च ।
३४१ अजियमिशीङ्भ्यश्च ।
३४२ वृतृवदिहनिकमिकषिभ्यः सः ।
३४३ प्लुषेरच्चोपधायाः ।
३४४ मनेर्दीर्घश्च ।
३४५ अशेर्देवने ।
३४६ स्नुव्रश्चिकृत्यृषिभ्यः कित् ।
३४७ ऋषेर्जातौ ।
३४८ उन्दिगुधिकुषिभ्यश्च ।
३४९ गृधिपण्योर्दकौ च ।
३५० अशेः सरः ।
३५१ वसेश्च ।
३५२ सम्पूर्वाच्चित् ।
३५३ कृधूमदिभ्यः कित् ।
३५४ पतेरश्च लः ।
३५५ तन्वृषिभ्यां क्सरन् ।
३५६ पीयुक्वणिभ्यां कालन्ह्रस्वः सम्प्रसारणं च ।
३५७ कटिकुषिभ्यां काकुः ।
३५८ सर्तेर्दुक्च ।
३५९ वृतेर्वृद्धिश्च ।
३६० पर्देर्नित्सम्प्रसारणमल्लोपश्च ।
३६१ सृयुवचिभ्योऽन्युजागूजक्नुचः ।
३६२ आनकः शीङ्भियः ।
३६३ आणको लूधूशिङ्घाङ्भ्यः ।
३६४ उल्मुकदर्विहोमिनः ।
३६५ ह्रियः कुक्रश्च लो वा ।
३६६ हलिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् ।
३६७ नञ्याप इट् च ।
३६८ तनिमृङ्भ्यां किच्च ।
३६९ अञ्जिघृसिभ्यः क्तः ।
३७० दुतनिभ्यां दीर्घश्च ।
३७१ जेर्मूट् चोदात्तः ।

३७२ लोलपलितौ।
३७३ हृश्याभ्यामितन्।
३७४ रुहे रश्च लो वा।
३७५ पिशेः किच्च।
३७६ श्रुदक्षिस्पृहिगृहिभ्य आय्यः।
३७७ दधिषाय्यः।
३७८ वृञ एण्यः।
३७९ स्तुवः क्सेय्यश्छन्दसि।
३८० राजेरन्यः।
३८१ शृञ्स्योश्च।
३८२ अर्तेर्निच्च।
३८३ पर्जन्यः।
३८४ वदेरान्यः।
३८५ अमिनक्षियजिवधिपतिभ्योऽत्रन्।
३८६ गडेरादेश्च कः।
३८७ वृञश्चित्।
३८८ सुविदेः कत्रन्।
३८९ कृतेर्नुम्च।
३९० भृमृदृशियजिपर्विपच्यमितमिनमिहर्यैभ्योऽतच्।
३९१ पृषिरञ्जिभ्यां कित्।
३९२ खलतिः।
३९३ शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः।
३९४ भृञश्चित्।
३९५ रुपीविदिभ्यां ङित्।
३९६ उपसर्गे वसेः।
३९७ अत्यविचमितमिनमिरभिलभिनभितपिपसिपनिपणिमहिभ्योऽसच्।
३९८ वेञस्तुट् च।
३९९ वहियुभ्यां णित्।
४०० वयश्च।
४०१ दिवः कित्।
४०२ कृशृशलिकलिगर्दिभ्योऽभच्।
४०३ ऋषिवृषिभ्यां कित्।
४०४ रुषेर्नित्लुक्च।
४०५ रासिवल्लिभ्यां च।
४०६ जृविशिभ्यां झच्।
४०७ रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि।
४०८ तृभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च।
४०९ हन्तेर्मुट् हि च।
४१० भन्देर्नलोपश्च।
४११ ऋच्छेररः
४१२ अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित्।
४१३ कुवः क्रन्।
४१४ अङ्गिमदिमन्दिभ्य आरन्।

४१५ गडेः कड च ।
४१६ शृङ्गारभृङ्गारौ ।
४१७ कञ्जिमृजिभ्यां चित् ।
४१८ कमेः किदुच्चोपधायाः ।
४१९ तुषारादयश्च ।
४२० दीङो नुट् च ।
४२१ सर्तेरपः षुक् च ।
४२२ उषिकुटिदलिकचिखजिभ्यः कपन् ।
४२३ क्वणेःसम्प्रसारणं च ।
४२४ कपश्चाक्रवर्मणस्य ।
४२५ विटपपिष्टपविशिपोलपाः ।
४२६ वृतेस्तिकन् ।
४२७ कृतिभिदिलतिभ्यः कित् ।
४२८ इष्यशिभ्यां तकन् ।
४२९ इणस्तशन्तशसुनौ ।
४३० वीपतिभ्यां तनन् ।
४३१ ददालिभ्यां भः ।
४३२ अर्तिगृभ्यां भन् ।
४३३ इणः कित् ।
४३४ असिसंजिभ्यां क्थिन् ।
४३५ प्लुषिकुषिशुषिभ्यःक्सिः ।
४३६ अशेर्नित् ।
४३७ इषेः क्सुः ।
४३८ अवितृस्तृतन्त्रिभ्य ईः ।
४३९ यापोः किद् द्वे च ।
४४० लक्षेर्मुट् च । इत्युणादिषु

तृतीयः पादः ॥
४४१ वातप्रमीः ।
४४२ ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्नच्यतुजलिजिष्ठुजिष्ठसनूस्यनिथिनुल्यसासानुकः
४४३ श्रः करन् ।
४४४ पुषः कित् ।
४४५ कलश्च ।
४४६ गमेरिनिः ।
४४७ आङि णित् ।
४४८ भुवश्च ।
४४९ प्रे स्थः ।
४५० परमे कित् ।
४५१ मन्थः ।
४५२ पतस्थ च ।
४५३ खजेराकः ।
४५४ बलाकादयश्च ।
४५५ पिनाकादयश्च ।
४५६ कषिदूषिभ्यामीकन् ।
४५७ अनिहृषिभ्यां किच्च ।
४५८ चङ्कणः कङ्कणश्च ।
४५९ शृपृवृञां द्वे रुक्चाभ्यासस्य ।
४६० फर्फरीकादयश्च ।
४६१ ईषेः किद्ध्रस्वश्च ।
४६२ ऋजेश्च ।

४६३ सर्तेर्नुम् च।
४६४ मृडः कीकन् कङ्कणौ।
४६५ अलीकादयश्च।
४६६ कॄतॄभ्यामीषन्।
४६७ शॄपॄभ्यां किच्च।
४६८ अर्जेर्ऋज च।
४६९ अम्बरीषः।
४७० कॄशॄपॄकटिपटिशौटिभ्य ईरन्।
४७१ वशेः कित्।
४७२ कशेर्मुट् च।
४७३ कृञ् उच्च।
४७४ घसेः किच्च।
४७५ गभीरगम्भीरौ।
४७६ विषा विहा।
४७७ पच पालिमच्।
४७८ शीङोधुक्लक्वलञ्वालनः
४७९ सृकणिभ्यामूकोकणौ।
४८० वलेरूकः।
४८१ उलूकादयश्च।
४८२ शमेर्बुक् च।
४८३ शल्मिमण्डिभ्यामूकण्।
४८४ अर्तेरुच्च।
४८५ भुवः कित्।
४८६ अश्नाते रश्च।
४८७ दालिमः।
४८८ वीज्याज्वरिभ्यो निः।
४८९ सृवृषिभ्यां कित्।
४९० अङ्गेर्नलोपश्च।
४९१ वाहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्।
४९२ घृणिपृश्निपार्ष्णिचूर्णिभूर्णि।
४९३ वृदृभ्यां विन्।
४९४ जॄशॄस्तॄजागृभ्यः क्विन्।
४९५ दिवो द्वे दीर्घश्चाभ्यासस्य
४९६ कृविघृष्विच्छविस्थविकिकीदिवि।
४९७ पातेर्डतिः।
४९८ शकेर्ऋतिन्।
४९९ अमेरातिः।
५०० वहिवस्यर्तिभ्यश्चित्।
५०१ अञ्चेः को वा।
५०२ हन्तेरंह च।
५०३ रमेर्नित्।
५०४ सुञः क्रिः।
५०५ अदिशदिभूशुभिभ्यः क्रिन्
५०६ वङ्क्र्यादयश्च।
५०७ राशदिभ्यां त्रिप्।
५०८ अदेस्त्रिनिश्च।
५०९ पतेरत्रिन्।
५१० सृकणिभ्यामीचिः।
५११ श्वयतेश्चित्।
५१२ वेञो डिच्च।

५१३ ऋहानिभ्यामूषन् ।
५१४ पुरःकुषन् ।
५१५ पॄनहिकालिभ्य उषच् ।
५१६ पीयेरूषन् ।
५१७ मस्जेर्नुम् च ।
५१८ गडेश्च ।
५१९ अर्तेररुः ।
५२० कुटः किच्च ।
५२१ शकादिभ्योऽटन् ।
५२२ कृकादिकाडेकाटिभ्योऽम्ब
च् ।
५२३ कदेर्णित्पक्षिणि ।
५२४ कालिकयोरमः ।
५२५ कुणिपुल्योः किन्दच् ।
५२६ कुपेर्वा वश्च ।
५२७ नो षञ्जेर्घथिन्
५२८ उद्यतौश्चित् ।
५२९ सर्तेर्णिच्च ।
५३० खर्जिपिञ्जादिभ्य ऊरोल-
चौ ।
५३१ कुवश्चट् दीर्घश्च ।
५३२ समीणः ।
५३३ सिवेष्टेरू च ।
५३४ शमेर्वन् ।
५३५ उल्वादयश्च ।
५३६ स्थः स्तोऽम्बजवकौ ।
५३७ शाशपिभ्यां ददनौ ।

५३८ अन्दादयश्च ।
५३९ वलिमलितनिभ्यः कयन् ।
५४० वृहेः षुग्दुकौ च ।
५४१ मिपीभ्यां रुः
५४२ जत्वादयश्च ।
५४३ रुशातिभ्यां क्रुन् ।
५४४ जनिदाच्युसृवृमदिपमि-
नमिभृञ्भ्य इत्वन्त्वन्त्न-
न्क्निन्शक्स्यढडटाटचः ।
५४५ अन्येभ्योऽपि दृश्यन्ते ।
५४६ कुसेरुम्भोमेदेताः ।
५४७ सानसिवर्णसिपर्णसित-
ण्डुलाङ्कुशचषालल्वलप-
ल्वलधिष्ण्यशल्याः ।
५४८ सूशकृग्रविभ्यः क्तः ।
५४९ माछाशसिभ्यो यः ।
५५० जनेर्यक् ।
५५१ अघ्न्यादयश्च ।
५५२ स्नामदिपद्यर्तिपॄशकिभ्यो
वनिप् ।
५५३ शीङ्क्रुशिरुहिजिक्षिसृ-
धृभ्यः क्वनिप् ।
५५४ ध्याप्योः सम्प्रसारणञ्च ।
५५५ अदेर्ध च ।
५५६ प्रईरशदोस्तुट् च ।
५५७ सर्वधातुभ्य इन् ।
५५८ हृपिषिरुहिवृतिविदिछि-

दिकीर्तिभ्यश्च।
५५९ इगुपधात्कित्
५६० भ्रमेः सम्प्रसारणं च
५६१ कमितमिशतिस्तम्भाम-
त इच्च।
५६२ मनेरुच्च।
५६३ वर्णबलिश्चाहिरण्ये।
५६४ वसिवपियजिराजिव्रजि-
सदिहनिवाशिवादिवा-
रिभ्य इञ्।
५६५ नहो भश्च।
५६६ कृषेर्वृद्धिश्छन्दसि।
५६७ अः शकुनौ।
५६८ कृञ उदीचां कारुषु।
५६९ जनिघसिभ्यामिण्।
५७० अज्यतिभ्यां च
५७१ पादे च।
५७२ अशिपणाय्योरुडायलु
कौ च।
५७३ वातेर्डिच्च।
५७४ प्रे हरतेः कूपे।
५७५ नौ व्यो यलोपः पूर्वस्य
च दीर्घः।
५७६ समानेख्यः स चोदात्तः।
५७७ आङि श्रिहनिभ्यांह्रस्वश्च
५७८ अच इः।
५७९ खनिकष्यज्यसिवसिव-
निसनिग्रन्थिचलिभ्यश्च।
५८० वृतेश्छन्दसि।
५८१ भुजेः किच्च।
५८२ कृगृशृपृकुटिभिदिछिदि-
भ्यश्च।
५८३ कुडिकम्प्योर्नलोपश्च।
५८४ सर्वधातुभ्यो मनिन्।
५८५ बृंहेर्नोच्च।
५८६ अशिशकिभ्यां छन्दसि।
५८७हभृधृसृस्तृशृभ्य इमनि च्।
५८८ जनिमृङ्भ्यामिमनिन्।
५८९ वेञः सर्वत्र।
५९० नामन् सीमन् व्योमन् रो-
मन् लोमन् पाप्मन् धामन्
५९१ मिथुने मनिः।
५९२ सातिभ्यां मनिन्मनिणौ।
५९३ हनिमशिभ्यां सिकन्।
५९४ कोररन्।
५९५ गिर उडच्।
५९६ इन्देः कमिर्नलोपश्च।
५९७ कायतेर्डिमिः।
५९८ सर्वधातुभ्यः ष्ट्रन्।
५९९ भ्रसिजगमिनमिहनिवि-
श्यशां वृद्धिश्च।
६०० दिवेर्द्युच्च।
६०१ उषिखनिभ्यां कित्।
६०२ सिविमुच्योष्टेरू च।
६०३ अमिचिमिदिशसिभ्यः क्त्रः

६०४ पुवो ह्रस्वश्च ।
६०५ स्त्यायतेर्ड्रट् ।
६०६ गुधृवीपाचिवचियमिसदिक्षदिभ्यस्त्रः ।
६०७ हुयामाश्रुमसिभ्यस्त्रन् ।
६०८ गमेरा च ।
६०९ दादिभ्यश्छन्दसि ।
६१० भूवादिगृभ्योणित्रन् ।
६११ चरेर्वृत्ते ।
६१२ अशित्रादिभ्य इत्रोत्रौ ।
६१३ अमेर्द्विषति चित् ।
६१४ आः समिण्निकाषिभ्याम् ।
६१५ चितेः कणः कश्च ।
६१६ सूचेः स्मन् ।
६१७ पातेर्डुम्सुन् ।
६१८ रुचिभुजिभ्यां किष्यन् ।
६१९ वसेस्तिः ।
६२० सावसेः ।
६२१ वौ तसेः ।
६२२ पथिप्रथिभ्यां नित् ।
६२३ दृणाते ह्रस्वश्च ।
६२४ कृतृक्षिपिभ्यः कीटन् ।
६२५ रुचिवाचिकुचिकुटिभ्यः क्रितच् ।
६२६ कुटिकुषिभ्यां क्मलन् ।
६२७ कुषेर्लश्च ।
६२८ सर्वधातुभ्योऽसुन् ।
६२९ रपेरत एच्च ।
६३० अशोर्देवने युट् च ।
६३१ उब्जेर्वले बलोपश्च ।
६३२ श्वेः सम्प्रसारणं च ।
६३३ श्रयतेः स्वाङ्गे शिरः किच्च ।
६३४ अर्तेरुच्च ।
६३५ व्याधौ शुट् च ।
६३६ उदके नुट् च ।
६३७ इण आगसि ।
६३८ रिचेर्धने धिच्च ।
६३९ चायतेरन्ने ह्रस्वश्च ।
६४० वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च ।
६४१ स्रुरीभ्यां तुट् च ।
६४२ पातेर्बले जुट् च ।
६४३ उदके थुट् च ।
६४४ अन्ने च ।
६४५ अदेर्नुम् धौ च ।
६४६ स्कन्देश्च स्वाङ्गे ।
६४७ आपः कर्माख्यायाम् ।
६४८ रूपे जुट् च ।
६४९ उदके नुम्भौ च ।
६५० नहेर्दिवि भश्च ।
६५१ इण आगोऽपराधे च ।
६५२ अमेर्हुक् च ।
६५३ रमेश्च ।

६५४ देशे ह च ।
६५५ अक्ष्याञ्जियुजिभ्यः कुश्च ।
६५६ भूरञ्जिजभ्यां कित् ।
६५७ वसेर्णित् ।
६५८ चन्देरादेश्च छः ।
६५९ पचिवचिभ्यां सुट् च ।
६६० वहिहाधाञ्भ्यश्छन्दसि ।
६६१ इण आसिः
६६२ मिथुनेऽसिः पूर्ववच्च सर्वम् ।
६६३ नञि हन एव च ।
६६४ विधाञो वेध च ।
६६५ नुवो धुट् च ।
६६६ गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च ।
६६७ चन्द्रे मो डित् ।
६६८ वयसि धाञः ।
६६९ पयसि च ।
६७० पुरसि च ।
६७१ पुरूरवाः ।
६७२ चक्षेर्बहुलं शिच्च ।
६७३ उपः कित् ।
६७४ दमेरुनसिः ।
६७५ अङ्गतेरसिरिरुडागमश्च ।
६७६ सर्तेरप्पूर्वादसिः ।
६७७ विदिभुजिभ्यां विश्वे ।
६७८ वशः कनसिः । इत्युणादिषु चतुर्थः पादः ॥४॥

६७९ अदिभुवो डुतच् ।
६८० गुधेरूमः ।
६८१ मसेरूरन् ।
६८२ स्थः किच्च ।
६८३ पातेरतिः
६८४ वातेर्नित् ।
६८५ अतेश्च ।
६८६ तृहेः क्नो हलोपश्च ।
६८७ वृञ्लुटितनिताडिभ्य उलच् तण्डश्च ।
६८८ दंसेष्टटनौ न आ च ।
६८९ दंशेश्च ।
६९० उदि चेर्डसिः ।
६९१ नौ दीर्घश्च ।
६९२ सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः ।
६९३ पूञो यण्लुक् ह्रस्वश्च ।
६९४ स्रंसेः शिः कुट् किच्च ।
६९५ अर्तेः क्युरुच्च ।
६९६ हिंसेरीरन्नीरचौ ।
६९७ उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च ।
६९८ डित् खनेर्मुट् स चोदात्तः ।
६९९ अमेः सन् ।
७०० मुहेः खो मूर्च ।
७०१ नहेर्हलोपश्च ।
७०२ शीङो ह्रस्वश्च ।
७०३ माङ ऊखो मय च ।

७०४ कलिगलिभ्यां फगस्योच्च।
७०५ स्पृशः श्वण्शुनौ पृच।
७०६ श्मनि श्रयतेर्डुन्।
७०७ अश्वादयश्च।
७०८ जनेष्टन् लोपश्च।
७०९ अच् तस्य जङ्ग च।
७१० हन्तेः शरीरावयवे द्वे च।
७११ क्लिशेरन् लो लोपश्च।
७१२ फलेरितजादेशश्च पः।
७१३ कृञादिभ्यः संज्ञायां वुन्।
७१४ चीकयतेराद्यन्तविपर्ययश्च।
७१५ पचिमच्योरिच्चोपधायाः
७१६ जनेररष्ठ च।
७१७ वचिमनिभ्यां चिच्च।
७१८ ऊर्जिदृणातेरलचौ पूर्वपदान्तलोपश्च
७१९ कुदरादयश्च।
७२० हन्तेर्युनाद्यन्तयोर्घत्वतत्वे
७२१ क्रमिगमिक्षमिभ्यस्तुन्वृद्धिश्च।
७२२ हर्यतेः कन्यन् हिरच्च।
७२३ कृञः पासः।
७२४ जनेस्तु रश्च।
७२५ ऊर्णोतेर्डः।
७२६ दधातेर्यन्नुट् च।
७२७ जीर्यतेः क्रिन् रश्च वः।
७२८ मव्यतेर्यलोपो मश्चापतुट् चाल्‌ः।
७२९ ऋजेः कीकन्।
७३० तनोतेर्डउः सन्वच्च।
७३१ अर्भकपृथुकपाका वयसि।
७३२ अवद्यावमाधमार्वरेफाः कुत्सिते।
७३३ लीरीङो ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः।
७३४ क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च।
७३५ अश्नोतेराशुकर्मणि वरट् च।
७३६ चतेरुरन्।
७३७ प्राततेररन्।
७३८ अमेस्तुट् च।
७३९ दहेर्गो लोपो दश्च नः।
७४० सिचेः संज्ञायां हनुमौ कश्च
७४१ व्याङि घ्रातेश्च जातौ।
७४२ हन्तेरच् घुर च।
७४३ क्षमेरुपधालोपश्च।
७४४ तरतेर्ड्रिः।
७४५ ग्रहेरनिः।
७४६ प्रथेरमच्।
७४७ चरश्च।
७४८ मङ्गेरलच्। इत्युणादिषु पञ्चमः पादः॥ इत्युणादिप्रकरणम्॥

इति शाकटायनप्रणीत उणादिसूत्रपाठः।

# शान्तनवाचार्यप्रणीतः फिट्सूत्रपाठः ।

१ फिषोऽन्त उदात्तः ।
२ पाटलापालङ्काम्बासागरार्थानाम् ।
३ गेहार्थानामस्त्रियाम् ।
४ गुदस्य च ।
५ ध्यपूर्वस्य स्त्रीविषयस्य ।
६ खान्तस्याश्मादेः ।
७ बंहिष्ठवत्सरतिशत्थान्तानाम् ।
८ दक्षिणस्य साधौ ।
९ स्वाङ्गाख्यायामादिर्वा ।
१० छन्दसि च ।
११ कृष्णस्यामृगाख्या चेत् ।
१२ वा नामधेयस्य ।
१३ शुक्लगौरयोरादिः ।
१४ अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः ।
१५ पृष्ठस्य च ।
१६ तर्जुनस्य तृणाख्या चेत् ।
१७ आर्यस्य स्वाम्याख्या चेत् ।
१८ आशाया अदिगाख्या चेत् ।
१९ नक्षत्राणामाब्विषयाणाम् ।
२० न कुपूर्वस्य कृत्तिकाख्या चेत् ।
२१ घृतादीनां च ।
२२ ज्येष्ठकनिष्ठयोर्वयसि ।
२३ बिल्वतिष्ययोः स्वरितो वा । इति फिट्सूत्रेषु प्रथमः पादः ॥
२४ अथादिः प्राक् शकटेः ।
२५ ह्रस्वान्तस्य स्त्रीविषयस्य ।
२६ नविषयस्यानिसन्तस्य ।
२७ तृणधान्यानां च द्व्यषाम् ।
२८ त्रः संख्यायाः ।
२९ स्वाङ्गशिटामदन्तानाम् ।
३० प्राणिनां कुपूर्वम् ।
३१ खय्युवर्णं कृत्रिमाख्या चेत् ।
३२ उनर्वन्नन्तानाम् ।
३३ वर्णानां तणतिनितान्तानाम् ।
३४ ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये ।
३५ अक्षस्यादेवनस्य ।
३६ अर्धस्यासमद्योतने ।
३७ पीतद्वर्थानाम् ।
३८ ग्रामादीनां च ।
३९ लुबन्तस्योपमेयनामधेयस्य
४० न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् ।

४१ राजविशेषस्य यमन्वा चेत् ।
४२ लघावन्ते द्वयोश्च बह्वषो गुरुः ।
४३ स्त्रीविषयवर्णाक्षुपूर्वाणाम् ।
४४ शकुनीनां च लघुपूर्वम् ।
४५ नर्तुप्राण्याख्यायाम् ।
४६ धान्यानां च वृद्धक्षान्तानाम् ।
४७ जनपदशब्दानामषान्तानाम् ।
४८ हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा ।
४९ इगन्तानां च द्व्यषाम् ॥ इति फिट्सूत्रेषु द्वितीयः पादः ॥
५० अथ द्वितीयं प्रागीषात् ।
५१ त्र्यचां प्राङ्मकारात् ।
५२ स्वाङ्गानामकुर्वादीनाम् ।
५३ मादीनां च ।
५४ शादीनां शाकानाम् ।
५५ पान्तानां गुर्वादीनाम् ।
५६ युतान्यण्यन्तानाम् ।
५७ मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा ।
५८ छन्दसि च ।
५९ कर्दमादीनां च ।
६० सुगन्धितेजनस्य ते वा ।
६१ नपः फलान्तानाम् ।
६२ यान्तस्यान्त्यात्पूर्वम् ।
६३ थान्तस्य चनालघुनी ।
६४ शिंशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च ।
६५ सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् ।
६६ ईषान्तस्य हयादेरादिर्वा ।
६७ उशीरदाशेरकपालपलाशवालश्यामाकशारीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम् ।
६८ महिष्यषाढयोर्जायेष्टकाख्या चेत् ॥ इति फिट्सूत्रेषु तृतीयः पादः ॥
६९ शकटिशकट्योरक्षरमक्षरं पर्यायेण ।
७० गोष्ठजस्य ब्राह्मणनामधेयस्य ।
७१ पारायतस्योपोत्तमवर्जम् ।
७२ धूम्रजानुमुञ्जकेशकालवालस्थालपाकानामधूजलस्थानाम् ।
७३ कपिकेशहरिकेशयोश्छन्दसि ।
७४ न्यङ्स्वरौ स्वरितौ ।
७५ न्यर्बुदव्यल्कशयोरादिः ।
७६ तिल्यशिक्यमर्त्यकाश्मर्यधान्याराजन्यमनुष्याणामन्तः ।

७७ बिल्वभक्ष्यवीर्याणि छन्दसि ।

७८ त्वत्त्वसमसिमेत्यनुच्चानि ।

७९ सिमस्याथर्वणेऽन्त उदात्तः

८० निपाता आद्युदात्ताः ।

८१ उपसर्गाश्चाभिवर्जम् ।

८२ एवादीनामन्तः ।

८३ आचादीनामुभावुदात्तौ ।

८४ चादयोऽनुदात्ताः ।

८५ यथेति पादान्ते ।

८६ प्रकारादिद्विरुक्तौ ।

८७ शेषं सर्वमनुदात्तम् । इति फिट्सूत्रेषु चतुर्थः पादः ॥

इति शान्तनवाचार्य-
प्रणीतः फिट्सू-
त्रपाठः ॥

—:*:—



श्रीगणेशायनमः ।

श्रीपतञ्जलिभ्योमुनिभ्योनमः ।

# अथ भाष्यवार्त्तिकपाठः ।

१ सिद्धेशब्दार्थसम्बन्धे ।

२ लोकतः ।

३ लोकतोऽर्थप्रयुक्ते शब्दप्रयोगेशास्त्रेणधर्मनियमः ।

४ यथालौकिकवैदिकेषु ।

५ अस्त्यप्रयुक्तः ।

६ अस्त्यप्रयुक्त इति चेन्नार्थेशब्दप्रयोगात् ।

७ अप्रयोगः प्रयोगान्यत्वात् ।

८ अप्रयुक्तेदीर्घसत्रवत् ।

९ सर्वे देशान्तरे ।

१० ज्ञाने धर्म इति चेत्तथाऽधर्मः ।

११ आचारे नियमः ।

१२ प्रयोगे सर्वलोकस्य ।

१३ शास्त्रपूर्वकेप्रयोगेऽभ्युदयस्तत्तुल्यंवेदशब्देन ।

१४ सूत्रेव्याकरणे षष्ठ्यर्थोऽनुपपन्नः ।

१५ शब्दाप्रतिपत्तिः ।

१६ शब्दे ल्युडर्थः ।

१७ भवे च तद्धितः ।

१८ प्रोक्तादयश्च तद्धिताः ।

१९ लक्ष्यलक्षणे व्याकरणम् ।

२० वृत्तिसमवायार्थ उपदेशः ।

२१ अनुबन्धकरणार्थश्च ।

२२ इष्टबुध्यर्थश्च ।

२३ इष्टबुध्यर्थश्चेतिचेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः ।

२४ आकृत्युपदेशात्सिद्धम् ।

२५ आकृत्युपदेशात्सिद्धमितिचेत्संवृतादीनां प्रतिषेधः ।

२६ गर्गादिबिदादिपाठात्संवृतादीनां प्रतिषेधः ।

२७ लिङ्गार्था तु प्रत्यापत्तिः ।

इति प्रथममाह्निकम् ।१।२७।

अइउण् ।

१ अकारस्य विवृतोपदेश आकारग्रहणार्थः ।

२ तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः ।

३ दीर्घप्लुतवचने च संवृत-

निवृत्त्यर्थः ।
४ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात् ।
५ एकत्वादकारस्य सिद्धम् ।
६ अनुबन्धसंकरस्तु ।
७ एकाजनेकाजग्रहणेषु चानुपपत्तिः ।
८ द्रव्यवच्चोपचाराः ।
९ विषयेण तु नानालिङ्गकरणात्सिद्धम् ।
१० एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानात् ।
११ आन्यभाव्यं तु कालशब्दव्यवायात् ।
१२ युगपच्चदेशपृथक्त्वदर्शनात् ।
१३ शकुनिवत्स्युः ।
१४ आदित्यवत्स्युः ।
१५ आकृतिग्रहणात्सिद्धम् ।
१६ तद्वच्चतपरकरणम् ।
१७ हल्ग्रहणेषु च ।
१८ रूपसामान्याद्वा ।

ऋलृक् ।

१ लृकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थः ।
२ न्याय्यभावात्कल्पनं संज्ञादिषु ।
३ अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु यथा लौकिकवैदिकेषु ।
४ एकदेशविकृतस्यानन्यत्वात्प्लुत्यादयः ।
५ रवत्प्रतिषेधाच्च ।

एओङ्—ऐऔच् ।

१ सन्ध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणम् ।
२ प्लुत्यादिष्वज्विधिः ।
३ प्लुतसंज्ञा च ।
४ अतपर एच इग्घ्रस्वादेशे ।
५ एकादेशे दीर्घग्रहणम् ।
६ वर्णैकदेशा वर्णग्रहणेन चेत्संध्यक्षरे समानाक्षरविधिप्रतिषेधः ।
७ दीर्घे ह्रस्वविधिप्रतिषेधः ।
८ एकवर्णवच्च ।
९ नाव्यपवृक्तस्यावयवस्य तद्विधिर्यथा द्रव्येषु ।
१० संध्यक्षरेषु विवृतत्वात् ।
११ अग्रहणंचेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणम् ।
१२ प्लुतावैच इदुतौ ।
१३ तुल्यरूपे संयोगे द्व्यञ्जनविधिः ।

हयवरट् ।

१ हकारस्य परोपदेशेऽड्ग्रह-

षेषु ह्ग्रहणम्
२ उत्वे च ।
३ पूर्वोपदेशे कित्वक्सेड्विधयो झलग्रहणानि च ।
४ रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः ।
५ पूर्वोपदेशे कित्वप्रतिषेधोव्यलोपवचनं च ।
६ अयोगवाहानामट्सु णत्वम् ।
७ शर्षु जश्भावषत्वे ।
८ अविशेषेण संयोगोपधासंज्ञाऽलोऽन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधाः
९ अर्थवन्तोवर्णा धातुप्रातिपदिकप्रत्यानिपातानामे
१० कवर्णानामर्थदर्शनात् ।
११ वर्णव्यत्यये चानर्थगमनात् ।
१२ वर्णानुपलब्धौ चानर्थगतेः ।
१३ संघातार्थवत्त्वाच्च ।
१४ संघातस्यैकार्थ्यात्सुबभावो वर्णात् ।
१५ अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः ।
१६ वर्णव्यत्ययोपायोपजनविकारेष्वर्थदर्शनात् ।
१७ प्रत्याहारेऽनुबन्धानां कथंमज्ग्रहणेषु न ।
१८ आचारात् ।
१९ अप्रधानत्वात् ।
२० लोपश्चबलवत्तरः ।
२१ ऊकालोऽजितिवा योगस्तत्कालानां यथाभवेत् । अचां ग्रहणमच्कार्यं तेनैषां न भविष्यति ॥
२२ अनुवर्त्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वम् । नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित्स्यात् ।

लण् ।

१ असन्दिग्धम् ।
२ पराभावात् ।
३ सवर्णेऽण्तपरं ह्युकृत् ।
४ ह्वोरन्यत्र परेणण् स्यात् ।
५ व्याख्यानाच्च द्विरुक्तितः ।

ञमङ्णनम् । झभञ् ।

१ अक्षरं नक्षरं विद्यात् ।
२ अश्नोतेर्वा सरोक्षरम् ।
३ वर्णवाहुः पूर्वसूत्रे ।
४ किमर्थमुपादिश्यते ।
५ वर्णज्ञानं वाग्विषयो यत्र च ब्रह्मवर्त्तते । तदर्थमिष्टबुध्यर्थं लघ्वर्थश्चोपदिश्यते । इति द्वितीयमाह्नि-

कम्। २।६८।

१ वृद्धिरादैच्।

२ संज्ञाधिकारः संज्ञासंप्रत्ययार्थः।

३ इतरथा ह्यसंप्रत्यो यथा लोके।

४ संज्ञासंज्ञ्यसन्देहश्च।

५ आचार्याचारात्संज्ञासिद्धिः।

६ यथा लौकिकवैदिकेषु।

७ संज्ञासंज्ञ्यसन्देहश्च।

८ अनाकृतिः।

९ लिङ्गेनवा।

१० सतोवृद्ध्यादिषुसंज्ञाभावात्तदाश्रय इतरेतराश्रयत्वादप्रसिद्धिः।

११ सिद्धं तु नित्यशब्दत्वात्।

१२ किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम्।

१३ वृद्धिगुणसंज्ञयोः प्रत्येकं वचनम्।

१४ अन्यत्र सहवचनात्समुदाये संज्ञाप्रसङ्गः।

१५ प्रत्यवयवं च वाक्यपरिसमाप्तेः।

इको गुणवृद्धी।

१ इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम्।

२ संज्ञया विधाने नियमः।

३ वृद्धिगुणावलोऽन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणम्।

४ सर्वादेशप्रसङ्गश्चानिगन्तस्य।

५ इङ्मात्रस्येति चेज्जुसि सार्वधातुकार्धधातुक ह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः।

६ पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम्।

७ नियमादिको गुणवृद्धी भवतो विप्रतिषेधेन।

८ वृद्धिग्रहणमुत्तरार्थम्।

९ तच्च मृज्यर्थम्।

१० इष्टार्थश्चापि।

११ मृज्यर्थमिति चेद्योगविभागात्सिम्।

१२ अटि चोक्तम्।

१३ वृद्धिप्रतिषेधानुपपत्तिस्त्विक्प्रकरणात् तस्मादिग्लक्षणा वृद्धिः।

१४ तस्मादिग्लक्षणा वृद्धिः।

१५ षष्ठ्याः स्थाने योगत्वादिगनिवृत्तिः।

१६ अन्यतरार्थं पुनर्वचनम्
१७ प्रसारणे च ।
१८ विषयार्थं पुनर्वचनम् ।
१९ उरण् रपरे च ।
२० सिद्धं तु षष्ठ्यधिकारे वचनात् ।

इति तृतीयमाह्निकम् ।

नधातु लोप आर्द्धधातुके ।

१ यङ्यक्क्यच्लोपे प्रतिषेधः
२ नुमलोपश्चित्यनुबन्धलोपऽ प्रतिषेधार्थम् ।
३ इक्प्रकरणान्नुमलोपे वृद्धिः
४ निपातनात्स्यंदादिषु ।
५ प्रत्ययाश्रयत्वादन्यत्र सिद्धम् ।
६ रकि ज्यः सम्प्रसारणम् ।
७ अल्लोपस्य स्थानिवत्त्वात् ।
८ अनारम्भो वा ।
९ उक्तं शेषे

क्ङितिच ।

१ क्ङिति प्रतिषेधे तन्निमित्तग्रहणम् ( उपधारोरवीत्यर्थम् )
२ उपधा रोरवीत्यर्थम् ।
३ शाच्छन्तस्यान्तरङ्गलक्षणत्वात् ।
४ तद्धितकाम्योरिक् प्रकरणात्
५ लकारस्य ङित्वादादेशेषु स्थानिवद्भाव प्रसङ्गः ।
६ लकारस्य ङित्वादादेशेषु स्थानिवद्भाव इति च यासुटो ङिद्वचनात्सिद्धम् ।

दीधीवेवीटाम् । परिभाषा सू०

१ दीधीवेव्योश्छन्दो विषयत्वाददृष्टानुविधित्वाच्च छन्दसः, छन्दस्यदीधयद्दीध्यूरिति गुणस्य दर्शनादप्रतिषेधः ।
२ दीध्यदिति च श्यन्व्यत्ययेन ।

संज्ञासूत्रम् ।

हलोऽनन्तराः संयोगः ।

१ संयोगसंज्ञायां सहवचनं यथाऽन्यत्र ।
२ समुदाये संयोगादिलोपाप्रसङ्गः ।
३ द्वयो र्हलोः संयोग इति चोद्दुर्वचनम् ।
४ स्वरानन्तर्हितवचनम् ।
५ दृष्टमानन्तर्यं व्यवहितेऽपि ।
६ आनन्तर्यवचनं किमर्थमिति चेदेकप्रतिषेधार्थम् ।

७ नवाऽतज्जातीयव्यवायात् ।

मुखनासिकेति ।

१ इतरेतराश्रयं तु ।

२ अनुनासिकसंज्ञायामितरेतराश्रये उक्तम् ।

तुल्यास्यप्रयत्नमिति ।

१ सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात् ।

२ सिद्धंत्वास्ये तुल्यदेशप्रयत्नं सवर्णम् ।

३ तस्य ।

४ तस्या वचनं वचनप्रामाण्यात् ।

५ ऋकारऌकारयोः सवर्णविधिः ।

नाज्झलौ ।

१ अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात् तत्र सवर्णलोपे दोषः ।

२ तत्र सवर्णलोपे दोषः ।

३ सिद्धमनच्त्वात् ।

४ वाक्यापरिसमाप्तेर्वा ।

इति चतुर्थमाह्निकम् ।

ईदूदेद्द्विवचनमिति ।

१ प्लुतानां प्रगृह्यत्वाप्रसङ्गोऽतत्कालत्वात् ।

२ ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्यविधिः ।

३ ईदाद्यन्तमिति चेदेकस्य विधिः ।

४ नवाद्यन्तवत्वात् ।

५ ईदाद्यन्तं द्विवचनान्तमिति चल्लुकि प्रतिषेधः ।

६ सप्तम्यासर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य ।

अदसो मादिति ।

१ मात्प्रगृह्यसंज्ञायां तस्यासिद्धत्वादयावेकादेशप्रतिषेधः ।

२ वचनार्थो हि सिद्धे ।

३ विप्रतिषेधाद्वा ( प्रगृह्यसंज्ञा )

४ आश्रयात्सिद्धत्वं यथा रोरुत्वे ।

५ असिद्धेह्युत्वे आद्गुणाप्रसिद्धिः ।

६ वचनसामर्थ्याद्वा ।

७ योगविभागाद्वा ।

८ मार्थादिदाद्यर्थानां वा ।

९ उक्तं वा ।

१० तत्र सक्ति दोषः ।

११ नवाग्रहणविशेषणत्वात् ।

शे ।

१ शेऽर्थवद्ग्रहणात् ।

निपात एकाजनाङ् ।

ओत् ।

१ ओतश्चिवप्रतिषेधः ।

उञ् ऊँ ।

१ उञ इति योगविभागः ।

२ ऊँ वा शाकल्यस्य

ईदूतौ च सप्तम्यर्थे ।

१ ईदूतौ सप्तमीत्येव ।

२ लुप्तेऽर्थग्रहणाद्भवेत् ।

३ पूर्वस्य चेत्सवर्णोऽसावा-
डाम्भावः प्रसज्यते ।

४ वचनाद्यत्र दीर्घत्वम् ।

५ तत्रापि सरसी यदि ।

६ ज्ञापकं स्यात्तदन्तत्वे ।

७ मा वा पूर्वपदस्य भूत् ।

दाधाघ्वदाप् ।

१ घुसंज्ञायां प्रकृतिग्रहणं
शिदर्थम् ।

२ घुसंज्ञायां प्रकृतिग्रहणं शि-
दुविकृतार्थम् ।

३ समानशब्दप्रतिषेधः ।

४ समानशब्दाप्रतिषेधोऽर्थ-
वद्ग्रहणात् ।

५ अनुपसर्गाद्वा ।

६ नवाऽर्थवतो ह्यागमस्त
द्गुणीभूतस्तद्ग्रहणेन
गृह्यते यथाऽन्यत्र ।

७ दीङः प्रतिषेधे स्थाध्वो
रित्वे ।

८ दाप्प्रतिषेधे न दैप्यनेज-
न्तत्वात् ।

९ सिद्धमनुबन्धस्यानेकान्त-
त्वात् ।

१० पित्प्रतिषेधाद्वा ।

( आद्यन्तवदेकस्मिन् )

१ सत्यन्यस्मिन्नाद्यन्तवद्भा-
वादेकस्मिन्नाद्यन्तवद्वच
नम् ।

२ तत्रव्यपदेशिवद्वचनम् ।

३ एकाचो द्वे प्रथमस्य ।

४ षत्वेचादेशसंप्रत्यार्थम् ।

५ अवचनाल्लोकविज्ञानात्सि-
द्धम् ।

६ अपूर्वानुत्तरलक्षणत्वादाद्य-
न्तयोः सिद्धमेकस्मिन् ।

७ आदिवत्वे प्रयोजनं प्रत्य-
यञ्नित्याद्युदात्तत्वे ।

८ वलादेरार्द्धधातुकस्येट् ।

९ यस्मिन्विधिस्तदादित्वे ।

१० अजाद्यद्त्वे ।

११ अन्तवद्द्विवचनान्तप्रगृ-
ह्यत्वे ।

१२ मिदचोऽन्त्यात्परः ।

१३ अचोऽन्त्यादिटि ।

१४ अलोऽन्त्यस्य।
१५ येन विधिस्तदन्तत्वे।

तरपतमपौ घः।

१ घसंज्ञायां नदीतरे प्रतिषेधः।
२ घसंज्ञायां नदीतरेऽप्रतिषेधः।
३ तरप्ग्रहणं चौपदेशिकम्।

बहुगणवतुडतिसंख्या।

१ संख्यासंज्ञायां संख्याग्रहणं संख्या संप्रत्ययार्थम्।
२ इतरथाह्यसम्प्रत्ययोऽकृत्रिमत्वाद्यथाल्लोके।
३ अध्यर्द्धग्रहणञ्च समासकन्विध्यर्थम्।
४ लुकि चाग्रहणम्।
५ अर्द्धपूर्वपदश्च पूरणप्रत्ययान्तः।
६ अधिकग्रहणञ्चालुकि समासोत्तरपदवृद्ध्यर्थम्।
७ बहुव्रीहौ चाग्रहणम्।
८ वह्वादीनामग्रहणम्।
९ ज्ञापकात्सिद्धम्।

ष्णान्ता षट्।

१ षट्संज्ञायामुपदेशवचनम्।
२ उक्तं वा।

इति च।

क्तक्तवतू निष्ठा।

१ निष्ठासंज्ञायां समानशब्दप्रतिषेधः।
२ निष्ठासंज्ञायां समानशब्दाप्रतिषेधः (अनुबन्धान्यत्वकरः)
३ अनुबन्धोऽन्यत्वकर इति चेन्न लोपात्।
४ सिद्धविपर्यासश्च।
५ कारककालविशेषात्सिद्धम्।
६ लुङि सिजादर्शनात्।

इति पञ्चममाह्निकम्।

सर्वादीनि सर्वनामानि।१।१।२६।

१ सर्वनामसंज्ञायां निपातनाणत्वाभावः।
२ संज्ञोपसर्जनं प्रतिषेधः।
३ पाठात्पर्युदासः पठितानां संज्ञाप्रकरणम्।
४ सर्वाद्यानन्तर्यकार्यार्थम्।
५ प्रयोजनं डतरादीनामद्ड्भावे।
६ त्यदादिविधौ च।
७ अन्याभावो द्विवचनटाप्विषयत्वात्।
८ उभयोऽन्यत्र।
९ अवचनादपि तत्परविज्ञानम्।

१० भवतोऽकच्छेषात्वानि ।

विभाषा दिक्समासे बहुव्रीहौ ।

न बहुव्रीहौ ।

१ प्रतिषेधे भूतपूर्वस्योपसंख्यानम् ।

२ प्रतिषेधे भूतपूर्वस्योपसंख्यानानर्थक्यं पूर्वादीनां व्यवस्थायामिति वचनात् ।

तृतीया समासे ।

विभाषा जसि ।

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ।

१ अवरादीनां च पुनः सूत्रपाठे ग्रहणानर्थक्यं गणे पठितत्वात् ।

स्वमज्ञातिधनाख्यायाम् ।

अन्तरं बहिर्योगोपसंव्यानयोः ।

१ उपसंव्यानग्रहणमनर्थकं बहिर्योगेण कृतत्वात् ।

२ नवा शाटकयुगाद्यर्थम् ।

३ अपुरि ।

४ वाप्रकरणे तीयस्य ङित्सूपसंख्यानम् ।

स्वरादिनिपातमव्ययम् ।

तद्धितश्चासर्वविभक्तिः ।

१ असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानम् ।

२ सर्वविभक्तिह्यविशेषात् ।

३ अलादीनाञ्चोपसंख्यानम् ।

४ अविभक्ताचितरेतराश्रयत्वादप्रसिद्धिः ।

५ अलिङ्गमसंख्यमिति वा

६ सिद्धं तु पाठात् ।

कृन्मेजन्तः ।

१ कृन्मेजन्तश्चानिकारोकारप्रकृतिः ।

२ अनन्यप्रकृतिरिति वा ।

३ नवा सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ।

४ प्रयोजनं ह्रस्वत्वं तुग्विधेः ग्रामणि कुलम् ।

५ नलोपे वृत्रहभिः ।

६ उदुपधत्वमकित्वस्य निकुचिते ।

७ नाभावो यञि दीर्घत्वस्यामुना ।

८ आत्वं कित्वस्योपादास्त

९ तिसृचतसृत्वं ङीप्विधेः ।

१० तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य ।

११ आत्वं पुग्विधेः क्रापयति ।

१२ पुग्ह्रस्वत्वस्यादीदपत् ।

१३ त्यदाद्यकारष्टाब्विधेः ।

१४ इङ्विधिराकारलोपस्य यथिवान् ।
१५ मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य ।
१६ नदीह्रस्वत्वं सम्बुद्धिलोपस्य ।

अव्ययीभावश्च ।

१ अव्ययीभावस्याव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचाराः ।

शिसर्वनामस्थानम् ।
सुडनपुंसकस्य ।

१ शिसर्वनामस्थानं सुडनपुंसकस्येति चेज्जसिशिप्रतिषेधः ।
२ असमर्थसमासश्च ।
३ नाप्रतिषेधात् ।
४ अप्राप्ते वा ।

नवेति विभाषा ।

१ नवेति विभाषायामर्थसंज्ञाकरणम् ।
२ शब्दसंज्ञायां ह्यर्थासम्प्रत्ययो यथाऽन्यत्र ।
३ इति करणोऽर्थनिर्देशार्थः ।
४ लोकतः ।
५ समानशब्दप्रतिषेधः ।
६ नवाविधिपूर्वकत्वात् प्रतिषेधसंप्रत्ययो यथालोके ।
७ विध्यनित्यत्वमनुपपन्नं प्रतिषेधसंज्ञाकरणात् ।
८ सिद्धं तु प्रसज्यप्रतिषेधात् ।
९ नवा प्रसङ्गसामर्थ्यादन्यअप्रतिषेधविषयात् ।
१० विप्रतिषिद्धयोर्युगपद्वचनानुपपत्तिः ।
११ भवतीति चेन्न प्रतिषेधः ।
१२ नेति चेन्न विधिः ।
१३ सिद्धं तु पूर्वस्योत्तरेण बाधितत्वात् ।
१४ साध्वनुशासनेऽस्मिन् शास्त्रे यस्य विभाषा तस्य साधुत्वम् ।
१५ द्वेधा प्रतिपत्तिः ।
१६ कार्येष्वयुगपदन्वाचययौगपद्यम् ।
१७ आचार्यदेशशीलनेचतद्विषयता ।
१८ तत्कीर्त्तनेन द्वेधाप्रतिपत्तिः ।

सू० प्रत्याख्या०

१९ अशिष्यो वा विदितत्वात् ।
२० अप्राप्ते त्रिसंशयाः ।
२१ द्वन्द्वे च विभाषा जसि ।
२२ ऊर्णोते विंभाषा ।
२३ विभाषोपयमने

२४ अनुपसर्गाद्वा ।
२५ विभाषा वृक्षमृगादीनाम् ।
२६ उषविदजागृभ्योऽन्यतरस्याम् ।
२७ द्वीपादीनां विभाषा ।
२८ विभाषाग्रे प्रथमपूर्वेषु । ६
२९ तृन्नादीनां विभाषा ।
३० एकहलादौ पूरयितव्येऽन्यतरस्याम् ।
३१ स्वादेरिञि । पदान्तस्यान्यतरस्याम् ।
३२ सपूर्वायाः प्रथमाया० विभाषा ।
३३ ओयङ्ष्यचि विभाषा ।
३४ प्राप्ते च ।
३५ विभाषा विप्रलापे ।
३६ विभाषोपपदेन प्रतीयमाने ।
३७ तिरोऽन्तर्द्धौ विभाषा कृञि ।
३८ अधिरीश्वरे विभाषा कृञि ।
३९ दिवस्तदर्थस्य विभाषोपसर्गे ।
४० उभय एव ।
४१ हृक्रोरन्यतरस्याम् ।
४२ न यदि विभाषा साकांक्षे ।
४३ विभाषाश्वेः ।
४४ विभाषासंघुषास्वनाम् ।
इति षष्ठमाह्निकम् ।

इग्यणः सम्प्रसारणम् ।१।१।४४।
१ सम्प्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिः ।
२ वर्णसंज्ञा चेन्निर्वृत्तिः ।
३ विभक्तिविशेषनिर्देशस्तुज्ञापक उभयसंज्ञात्वस्य ।
आद्यन्तौ टकितौ ।१।१।४५।
१ टकितोराद्यन्तविधाने प्रत्ययप्रतिषेधः ।
२ परवचनात्सिद्धम् ।
३ परवचनात्सिद्धमिति चेन्नापवादत्वात् ।
४ सिद्धं तु षष्ठ्यधिकारेवचनात् ।
५ आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावेऽसंप्रत्ययः ।
मिदचोऽन्त्यात्परः ।१।१।४६
१ मिदचोऽन्त्यात्पर इति स्थानपरप्रत्ययापवादः ।
२ अन्त्यात्पूर्वो वा मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थम् ।
३ अर्जिमच्योश्च ।
४ अभक्ते दीर्घनलोपस्वरणत्वानुस्वारशीभावाः ।
५ परादौ गुणवृद्ध्यौत्वदीर्घनलोपानुस्वारशीभावेनकार-

प्रतिषेधाः ।

६ पूर्वान्तेनपुंसकोपसर्जनह्र-स्वत्वं द्विगुस्वरश्च ।

एच इग्घ्रस्वादेशे ।१।१।४७।

१ एच इग्वचनं सवर्णाऽकारनिवृत्त्यर्थम् ।

२ दीर्घप्रसङ्गः ।

३ दीर्घाऽप्रसङ्गस्तु निवर्तकत्वात् ।

४ सिद्धमेङः सस्थानत्वात् ।

५ ऐचोश्चोत्तरभूयस्त्वात् ।

षष्ठीस्थानेयोगा । १।१। ४८ ।

१ षष्ठ्याः स्थाने योगवचनं नियमार्थम् ।

२ अवयवषष्ठ्यादिष्वतिप्रसङ्गः शासो गोह इति ।

३ अवयवषष्ठ्यादीनां चाप्राप्तिर्योगस्यासंदिग्धत्वात् ।

स्थानेऽन्तरतमः । १। १। ४९ ।

१ स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च सर्वप्रसङ्गस्तस्मात्स्थानेऽन्तरतमवचनं नियमार्थम् ।

२ स्थानेऽन्तरतमनिर्वर्तके सर्वस्थानिनिवृत्तिः ।

३ निर्वृत्तप्रतिपत्तौ निर्वृत्तिः ।

४ अनर्थकश्च

५ उक्तं वा

६ प्रत्यात्मवचनञ्च

७ प्रत्यात्मवचनमशिष्यं स्वभावसिद्धत्वात् ।

९ व्यञ्जनस्वरव्यतिक्रमे च तत्कालप्रसङ्गः ।

१० अक्षु चानेकवर्णादेशेषु ।

११ गुणवृद्ध्येज्भावेषु च ।

१२ ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गोऽविशेषणात् ।

१३ न वा ऋवर्णस्य स्थाने रपरप्रसङ्गादवर्णस्यान्तर्यम् ।

१४ न वाऽनेकालत्वस्य तदाश्रयत्वादवर्णादेशस्याऽविघातः

१५ एज्वर्णयोरादेशेऽवर्णस्थानिनोऽवर्णप्रधानत्वात् ।

१६ सिद्धं तूभयान्तर्यात् ।

उरण्रपरः । १ । ५० ।

१ उरण्रपरवचनमन्यनिवृत्त्यर्थमिति चेदुदात्तादिषु दोषः ।

२ य उः स्थानेऽण् स रपर इति चेद्गुणवृद्ध्योरवर्णाऽप्रतिपत्तिः ।

३ सिद्धं तु प्रसङ्गे रपरत्वात् ।

४ आदेशो रपर इति चेद्धोरिविधिषु प्रतिषेधः ।

५ उदात्तादिषु ।
६ एकादेशस्योपसंख्यानम् ।
७ अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तप्रतिषेधः ।
९ भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात्षत्वप्रतिषेधस्य ।
१० अभक्ते दीर्घणत्वयगभ्यस्तस्वरहलादिःशेषविसर्जनीय प्रतिषेधः । प्रत्ययाव्यवस्थाच ।
११ पूर्वान्तेवंवधारणं विसर्जनीयप्रतिषेधोयक् स्वरश्च ।
१२ परादावकारलोपेत्वपुक्प्रतिषेधश्चङ्युपधाह्रस्वत्वमिटोऽव्यवस्थाऽभ्यासलोपोऽभ्यस्तादिस्वरो दीर्घत्वञ्च ।

अलोऽन्त्यस्य । १ । १ । ५१ ।

१ अलोऽन्त्यस्येतिस्थाने विज्ञातस्यानुसंहारः ।
२ इतरथाह्यनिष्टप्रसङ्गः ।
३ योगशेषे च ।

ङिच्च । १ । १ ५२ ।

१ तातङिङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशः ।

आदेः परस्य । १ । १ ।५३।

१ अलोऽन्त्यस्यादेः परस्यानेकाल्शित्सर्वस्येत्यपवादविप्रतिषेधात्सर्वादेशः ।

अनेकाल्शित्सर्वस्य ।१।१।५४।

इति सप्तममान्हिकम् ।

स्थानिवदादेशोऽनल्विधौ । १ । १ । ५५ ।

१ स्थान्यादेशपृथक्त्वादादेशे स्थानिवदनुदेशोगुरुवद्गुरुपुत्र इति यथा ।
२ अल्विधौ प्रतिषेधऽविशेषणेऽप्राप्तिस्तस्यादर्शनात् ।
३ सामान्यातिदेशे हि विशेषानतिदेशः ।
४ सत्याश्रये विधिरिष्टः ।
५ प्रतिषेधस्तु प्राप्नोत्यल्विधित्वात् ।
६ नवाऽनुदेशिकस्य प्रतिषेधादितरणभावः ।
७ आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः ।
८ आदेश्यादेश इति चेत्सुप्तिङ्कृदातदिष्टषूपसंख्यानम् ।

( एकदेशविकृतन्यायाधि-

करणम्।)

१ एकदेशविकृतस्योपसं-
ख्यानम्।

२ एकदेशविकृतस्यानन्यत्वा
त्सिद्धम्।

३ अनित्यविज्ञानं तु तस्मादु-
पसंख्यानम्।

( भारद्वाजीयाः पठन्ति )

१ एकदेशविकृतेषूपसंख्यानम्।

२ अनादेशत्वात्।

३ रूपान्यत्वाच्च।

११ आदेशः स्थानिवदिति चे-
न्नानाश्रितत्वात्।

१२ आश्रय इति चेदल्विधि-
प्रसङ्गः।

१३ अनुपपन्नं स्थान्यादेशत्वं
नित्यत्वात्।

१४ सिद्धं तु यथालौकिकवै-
दिकेषु भूतपूर्वेऽपिस्थान-
शब्दप्रयोगात्।

(१४) कार्यविपरिणामाद्वा
सिद्धम्।

१५ अपवादप्रसङ्गस्तु स्थानि-
वत्त्वात्।

१६ उक्तं वा।

१७ सिद्धं तु षष्ठीनिर्दिष्टस्य
स्थानिवद्वचनात्।

१८ तस्य दोषस्तयादेश उभ-
यप्रतिषेधः।

१९ जात्याख्यायां वचनादेशे
स्थानिवद्भावप्रतिषेधः।

२० ङ्याब्ग्रहणेऽदीर्घः।

२१ आहिभुवोरीट्प्रतिप्रतिषेधः

२२ वध्यादेशे वृद्धितत्वप्रतिषेधः

२३ इङिरधिश्च।

२४ अकारान्तान्नुक्प्रुक्
प्रतिषेधः।

२५ लोडादेशे शाभावजभाव-
धित्वहिलोपैत्वप्रतिषेधः।

२६ त्र्यादेशे स्रन्तप्रतिषेधः।

२७ अम्विधौ च।

२८ स्वरे वस्वादेशे।

२९ गोः पूर्वणित्वात्वस्वरेषु।

३० करोतिपिबत्योः प्रतिषेधः।

३१ उक्तं वा।

अचः परस्मिन् पूर्वविधौ।१।१।५६।

१ अपरविधाविति तु।

२ स्तोष्यामहं पादिकमौद-
वाहिं ततः श्वोभूते शात-
नीं पातनीं च। नेतारावाऽऽग-
च्छतं धारणिं रावणिं च
ततः पश्चात्स्रंस्यते ध्वं-
स्यते च।

३ आरभ्यमाणे नित्योऽसौ ।
४ परश्चासौ व्यवस्थया ।
५ युगपत्संभवो नास्ति ।
६ बहिरङ्गेण सिध्यति ।
७ अचः पूर्वविज्ञानादैचोः सिद्धम् ।
८ तत्रादेशलक्षणप्रतिषेधः ।
९ असिद्धवचनात्सिद्धम् ।
१० असिद्धवचनात्सिद्धमिति चेदुत्सर्गलक्षणानामनुदेशः
११ असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्धवचना- दन्यस्य भावः ।
१२ तस्मात्स्थानिवद्वचनम- सिद्धत्वञ्च ।
१३ उक्तं वा ।
१४ काममतिदिश्यतां सच्चास- च्चापि नेह भारोऽस्तिकल्प्यो हि वाक्यशेषो वाक्यं व- क्त्र्यधीनंहि ।
१५ अनन्तरस्य चेदेकाननुदा- त्तद्विगुस्वरगतिनिघाते- ष्पूपसंख्यानम् ।
१६ पूर्वमात्रस्येति चेदुपधाह्र- स्वत्वम् ।
१७ गुरुसंज्ञा च ।
१८ न वा संयोगस्यापूर्वविधित्वात् ।
१९ एकादेशस्योपसंख्यानम् ।
२० उभयनिमित्तत्वात् ।
२१ उभयादेशत्वाच्च ।
२२ हलचोरादेशस्थानिवदि- ति चेद्विशतेस्ति लोप एकादेशः ।
२३ स्थूलादीनां यणादिलोपे- ऽवादेशः ।
२४ केकयमित्रय्वोरियादेश एत्वम् ।
२५ उत्तरपदलोपेच ।
२६ यङ्लोपे यणियङुवङः ।
२७ अस्थानिवत्वे यङ्लोपे गुणवृद्धिप्रतिषेधः ।
२८ अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः
२९ द्विर्वचनादयश्च प्रतिषेधे ।
३० क्सलोपे लुग्वचनम् ।
३१ हन्तेर्घत्वम् ।
३२ ग्रहणेषु स्थानिवदिति चे- ज्जग्ध्यादिष्वादेशप्रतिषेधः।
३३ यणादेशेयुलोपेत्वानुना- सिकात्वप्रतिषेधः ।
३४ रायात्वप्रतिषेधश्च ।
३५ दीर्घे यलोपप्रतिषेधः ।
३६ अतो दीर्घे यलोपवचनम् ।

न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु । १ । १ । ५७ ।

१ प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् ।

२ क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् ।

३ पूर्वत्रासिद्धं च ।

४ प्रयोजनं क्सलोपः सलोपे ।

५ दध आकारलोप आदिचतुर्थत्वे ।

६ हलो यमां यमि लोपे ।

७ अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु ।

८ द्विर्वचनादीनि च ।

९ वरे यलोपस्वरवर्ज्यम् ।

१० तस्य दोषः संयोगादिलोपलत्वणत्वेषु ।

द्विर्वचनेऽचि । १ । १ । ५८ ।

१ (प्र० खं०) आदेशे स्थानिवदनुदेशात्तद्वतो द्विर्वचनम् । (द्वि० खं०) तत्राभ्यासरूपम् ।

२ अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य ।

३ तत्र गाङ्प्रतिषेधः ।

४ कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपम् ।

५ प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपम् ।

६ द्विर्वचननिमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्वचनम् ।

७ ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य ।

इत्यष्टममाह्निकम् ।

अथ नवममाह्निकम् ।

अदर्शनं लोपः । १ । १ । ५९ ।

१ लोपसंज्ञायामर्थसंज्ञाकरणम् ।

२ इतरेतराश्रयश्च ।

३ लोपसंज्ञायामर्थसतोरुक्तम् ।

४ (प्र० खं०) सर्वप्रसङ्गस्तु सर्वस्यान्यत्रादृष्टत्वात् । (द्वि० खं०) तत्र प्रत्ययलक्षणप्रतिषेधः ।

५ सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञत्वात् ।

प्रत्ययस्य लुक्श्लुलुपः । १ । १ । ६० ।

१ लुमतिप्रत्ययग्रहणमप्रत्ययसंज्ञाप्रतिषेधार्थम् ।

२ प्रयोजनं तद्धितलुकि कंसीयपरशव्ययोः लुकि च

गोप्रकृतिनिवृत्त्यर्थम् ।
३ कंसीयपरशव्ययो र्विशि-
ष्टनिर्देशात्सिद्धम् ।
४ उक्तं वा ।
५ षष्ठी निर्देशार्थं तु ।
६ अनिर्देशेहि षष्ठ्यर्था-
प्रसिद्धिः ।
७ सर्वादेशार्थं वा वचन प्रा-
माण्यात्
८ उत्तरार्धन्तु ।
प्रत्ययलोपे प्रत्ययल-
क्षणम् । १। १। ६१ ।
१ प्रत्ययलोपे प्रत्ययलक्षण-
वचनं सदन्वाख्याना-
च्छास्त्रस्य ।
लुक्युपसंख्यानम् ।
२ लोपे हि विधानम् ।
३ नवाऽदर्शनस्य लोपसं
ज्ञित्वात् ।
प्रत्ययादर्शनं तु लुमत्संज्ञम् ।
४ तत्र लुकि श्लुविधिः
प्रतिषेध्यः ।
५ नवा पृथक् संज्ञाकरणात् ।
६ लुमतिप्रतिषेधाद्वा ।
७ सतो निमित्ताभावात्पदसं-
ज्ञाऽभावः ।
८ लुम्दीर्घत्वयोश्च विप्रति-
षेधानुपपत्तिरेकयोगलक्ष-
णत्वात्परिवीरिति ।
९ स्थानिसंज्ञानुदेशादान्य-
भावस्य ।
१० भसंज्ञाङीप्ष्फगोरात्वेषु
च सिद्धम् ।
११ तस्य दोषो ङौ नकारलो-
पेत्वेऽविधयः ।
१२ प्रयोजनमपृक्तशिलोपेनुम-
सामौ गुणवृद्धीदीर्घत्वम-
डाट्इनविधयः ।
(१२) प्रयोजनं ङौ नकारलोपे-
त्वविधयः ।
१३ भसंज्ञाङीप्ष्फगोरात्वेषु
नलुमताङ्गस्य । १। १। ६२।
लुमति प्रतिषेध एकपद-
स्वरस्योपसंख्यानम् ।
१ सर्वामन्त्रितसिज्लुक्
स्वरवर्जम् ।
२ प्रयोजनाशिनिकिलुकिस्वराः
३ पथिमथोः सर्वनामस्था-
ने लुकि ।
४ अहो रविधौ ।
५ उत्तरपदत्वे चापदादिविधौ ।
६ नाप्रतिषेधात् ।
७ अप्राप्तेर्वा ।
८ बहुच पूर्वस्य च ।

९ द्वन्द्वेऽन्त्यस्य।
१० सिचि जुसोऽप्रसङ्ग आकारप्रकरणात्।
११ युष्मदस्मदोःस्थग्रहणात्।
१२ आमिणिलोपात्तस्य चानिघातस्तस्माच्चनिघातः।
१३ अङ्गाधिकारे द्वयोर्विधिप्रतिषेधौ।
१४ क्रमेर्दीर्घत्वञ्च।
१५ नलुमता तस्मिन्।
१६ नलुमता तस्मिन्निति चेद्धनिणिङादेशास्तलोपे।

अलोऽन्त्यात्पूर्व उपधा। १। १। ६४।

१ उपधासंज्ञायामल्ग्रहणसन्त्यनिर्देशश्चेत्संघातप्रतिषेधः।
२ अन्त्यविज्ञानात्सिद्धम्।
३ अन्त्यविज्ञानात्सिद्धमिति चेन्नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे।
४ प्रयोजनमव्यक्तानुकरणस्यात इतौ।
५ ध्वसोरेद्धावभ्यासलोपश्च।
६ आपिलोपोऽकोऽनचि।
७ अत्र लोपोऽभ्यासस्य।
८ अलोऽन्त्यात्पूर्वोऽलपधेति वा।
९ अवचनाल्लोकविज्ञानात्सिद्धम्।

तस्मिन्निति निर्दिष्टे पूर्वस्य। १। १। ६५।

तस्मादित्युत्तरस्य। १। १। ६६।

१ निर्दिष्टग्रहणमानन्तर्यार्थम्
२ तस्मिंस्तस्मादितिपूर्वोत्तरयोगविशेषान्नियमार्थं वचनं दध्युदकं पचत्योदनम्।
३ उभयनिर्देशेविप्रतिषेधात्पञ्चमीनिर्देशः।
४ प्रयोजनमतो न सार्वधातुकानुदात्तत्वे।
५ वहोरिष्ठादीनामादिलोपे।
६ गोतो णित्।
७ रुदादिभ्यः सार्वधातुके।
८ आने मुगीदासः।
९ आमि सर्वनाम्नः सुट्।
१० घेर्ङित्याण्नद्याः।
११ याडापः।
१२ ङमोह्रस्वादचिङमुणनित्यम्।
१३ विभक्तिविशेषनिर्देशानवकाशत्वाद्विप्रतिषेधः।

१४ यथार्थं वा षष्ठीनिर्देशः ।
१५ प्रकल्पकमिति चेन्नियमाभावः ।
१६ प्रकृतिविकाराव्यवस्था च ।
१७ सप्तमीपञ्चम्योश्चभावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्गः ।
स्वं रूपं शब्दस्याशब्दसंज्ञा । १ । १ । ६७ ।
१ शब्देनार्थगतेरर्थकार्यस्यासंभवात् । तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वंरूपवचनम् ।
२ नवा शब्दपूर्वकोह्यर्थे संप्रत्ययस्तस्मादर्थनिवृत्तिः ।
३ शब्दसंज्ञाप्रतिषेधानर्थक्यं वचनप्रामाण्यात् ।
४ मन्त्राद्यर्थमिति चेच्छास्त्रसामर्थ्यादर्थगतेःसिद्धम् ।
५ सित्तद्विशेषणावृक्षाद्यर्थम् ।
६ पित्पर्यायवचनस्य च स्वाद्यर्थम् ।
७ जित्पर्यायवचनस्यैव राजाद्यर्थम् ।
८ झित्तस्य च तद्विशेषाणाञ्चमत्स्याद्यर्थम् ।
अणुदित्सवर्णस्य चाप्रत्ययः । १ । १ । ६९ ।
१ अण्सवर्णस्येति स्वरानुनासिक्यकालभेदात् ।
२ तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात् ।
३ ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणशब्दसंप्रत्यायकत्वाच्छब्दस्यावचनम् ।
४ वर्णपाठ उपदेश इति चेन्नवरकालत्वात्परिभाषाया अनुदेशः ।
५ तस्मादुपदेशः ।
६ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात् ।
(६) वचनाद्यत्र तन्नास्ति ।
सवर्णे[illegible]ग्रहणमपरिभाष्यमाकृतिग्रहणात् ।
अनन्यत्वाच्च ।
७ अनेकान्तोह्यन्यत्वकरः ।
सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वम् ।
अनेकान्तोह्यन्यत्वकरः ।
तद्वच्चहल्ग्रहणेषु ।
८ अनेकान्तोह्यन्यत्वकरः ।
९ द्रुतविलम्बितयोश्चानुपदेशात् ।

वृत्तिपृथक्त्वं तु नोपपद्यते
१० तस्मात्तत्र तपरनिर्देशात्सिद्धम्।

तपरस्तत्कालस्य। १। १। ६९।

१ तपरस्तत्कालस्येति चेद्दीर्घग्रहणे स्वरभिन्नाग्रहणम्।
२ प्रापकमिति चेद्‌ ह्रस्वग्रहणे दीर्घप्लुतप्रतिषेधः।
३ विप्रतिषेधात्सिद्धम्।
४ द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात्।
५ सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद्‌ वृत्तयो विशिष्यन्ते भेर्याघातवत्।

आदिरन्त्येन सहेता। १। १। ७०।

१ आदिरन्त्येनसहेतेत्यसम्प्रत्ययः संज्ञिनोऽनिर्देशात्।
२ सिद्धंत्वादिरितासहतन्मध्यस्येति वचनात्
३ सम्बन्धिशब्दैर्वा तुल्यम्।

येन विधिस्तदन्तस्य। १। १। ७१।

१ येनविधिस्तदन्तस्येति। चेत्‌ ग्रहणोपाधीनां तदन्तोपाधिप्रसङ्गः।
२ सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात्।
३ समासप्रत्ययविधौ प्रतिषेधः
४ उगिद्वर्णग्रहणवर्ज्यम्।
५ अकज्‌ इनस्वतः सर्वनामाव्ययधातुविधावुपसंख्यानम्।
६ सिद्धं तु तदन्तान्तवचनात्।
७ तदेकदेशविज्ञानाद्वा सिद्धम्।
८ प्रयोजनं सर्वनामाव्ययसंज्ञायाम्।
९ उपपदविधौ भयाढ्यादिग्रहणम्।
१० ङीब्विधावुगिद्‌ग्रहणम्।
११ प्रतिषेधे स्वसादिग्रहणम्।
१२ अपरिमाणबिस्तादिग्रहणञ्च
१३ दिति।
१४ रोण्या अण्।
१५ तस्य च।
१६ स्थलीताहलेभ्यो यञ्चिधौ।
१७ स्वसर्वार्द्धदिकछब्देभ्यो जनपदस्य
१८ ऋतो वृद्धिमद्विधाववयवा-

नाम् ।
१९ ठञ्विधौ संख्यायाः ।
२० घर्माद्वञः ।
२१ पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च ।
२२ प्रयोजनमिष्टकेषीकामालानां चिततूलभारिषु ।
२३ महदप् स्वसृनप्तॄणां दीर्घविधौ ।
२४ पद्युष्मदस्मदस्थ्यादनडुहोनुम् ।
२५ द्युपाथिमाथिपुंगोसखिचतुरनडुत्त्रिग्रहणम् ।
२६ त्यदादिविधिभस्त्रादिस्त्रीग्रहणञ्च ।
२७ वर्णग्रहणञ्च सर्वत्र ।
२८ प्रत्ययग्रहणञ्चापञ्चम्याः ।
२९ अलैवानर्थकेन ।
३० अनिनस्मन्ग्रहणानि च ।
३१ यस्मिन्विधिस्तदादावल्ग्रहणे ।

वृद्धिर्यस्याचामादिस्तद्वृद्धम् । १ । १ । ७२ ।

१ वृद्धसंज्ञायामजसंनिवेशादनादित्वम् ।
२ एकान्तादित्वे च सर्वप्रसङ्गः ।
३ सिद्धमजाकृतिनिर्देशात् ।
४ व्यञ्जनस्याविद्यमानत्वम् ।
५ वा नामधेयस्य ।
६ गोत्रोत्तरपदस्य च ।
७ गोत्रान्ताद्वाऽसमस्तवत् ।
८ जिह्वाकात्यहारितकात्यवर्जम्

त्यदादीनि च । १ । १ ७३ ।

१ एङ् प्राचां देशे शैषिकेषु ।

इति नवममाह्निकम् ।

वार्तिकसंख्या ५८०

# [ सूचीपत्रम् ]